**नग**[a]– -गेषु शौ १९,८,१.

**नग्न,ग्ना**[b]– -ग्नः ऋ **१०**, ६१, ९; तै **६**, ५, ८, ६¶; ¶मै **३**,९, ३; –ग्नम् ऋ ४,२५,७; ८,७९,२; –ग्ना शौ ५, ७, ८; पै **७**, ९,५; –ग्नाः ऋ ८,२,१२; जै **४**, २२, १†.

नग्न-क[c]– -कात् शौ ८, ६, २१; पै **१६**,८१,३.

नग्नं √कृ

नग्नं–कृत्य तै ६, ५,८,६¶.

नग्न-ता– -ता ऋ **१०**,३३,२.

¶नग्नं-भावुक,का[d]– -कः मै **३**, ६,५; काठ **२३**, २; **२६**, ६; क **४१**,४; –काः तै **६**, १,३,८.

**नग्नहु**[e]– -हुः मा **१९**, १४; ८३; का **२१**, २, ३; ६,४; मै **३**, ११,९; काठ **३८**, ३; –हुम् मा **२०**, ५७[f]; **२१**,३१; का **२२**, ६, ३[f]; **२३**, ४,३; मै **३**, ११, २; ३[f]; काठ **३८**,८[f].

?**नघमार**[g]– -रः शौ १९, ३९, २; पै **७**,१०,२.

**नघायम्**[h] शौ १९,३९,२-४.

?**नघारिष,षा**[i]– -षः शौ १९,३९, २; पै **७**, १०,२; –षाम् शौ ८, २, ६; ७, ६; पै **१**,९३, २?[j]; **१३**, १३,१०; **१६**, ३,६; १२,६.

**न चा इ त्था न चा इ हा व मा स तो अक्षे**[k] पै ५,९,४.

**नड,ळ(ऋ)**[l]– -¶डः काठ **२५**, ७; क **३९**,५; –डम् काठ **२५**,७¶; क **३९**,५¶; शौ**४**,१९,१;**६**,१३८, ५;**१२**,२,१;५०;५४; पै **१**,६८, १; **५**, २५,१;३२,१०; **१२**, ३, ५; **१७**, ३०,१;३४,११;३५,२; –डस्य पै ९, ७, १३; –डाः ऋ ८,१,३३; शौ **६**, १३७,२[m];३; –डे शौ **१२**, २, १९; पै **१७**, ३१,९; –डेषु पै ९,७,१२.

नड्-व (ल>)ला[n]– -लाभ्यः मा **३०**, १६; का **३४**,३,३; –लासु पै १९,३०,९.

?**नडव्रतीन्**[o] पै **१७**,२९,८; ११.

**न-तमाम्** न द्र.

?**नत्त**[p] पै ५,९,७.

?**न त्वा म स्ते**[q] पै ११,७,१०.

**√नद्** (बधा.), > नदि, नानद्, नदति[2], नदतु पै **२०**, ३९, २; अनदत>ता तै ५, ६, १,२; मै २,१३, १; काठ **३९**,२; शौ **३**, १३,१; पै **३**,४,१.

नदयन्त ऋ **१**,१६६,५.

नानदति ऋ**१**,६४,८;८,२०,५[r].

---

a) नाप. (पर्वत-)। व्यु. ?। पपा. नावग्रहः। <न+√गम् इति पा(**६**,३,७७,)<√दह् इति पाउ (५,६१)?।

b) विप.। व्यु. ?। पपा. नावग्रहः। <√नज् [व्रीडायाम्] इति अभा. अक्षी. च। न+(√*वर्ग् [आच्छादने] >भावे) *वर्गण– > बस. न-वर्गण– > नैप्र. यनि. इति तु स्यात्।   c) कुत्सायां स्वार्थिकः **कप्** प्र.।

d) विप.। उस. उप. √भू+खुकञ् प्र.।

e) नाप. (सुरा-कन्द- [किरावं-])। व्यु. ?। पपा. नावग्रहः। <नग्न–+√ह्वे इति अची. अभा.।

f) सपा. तैब्रा **२**, ६,१२,१ नग्नहुः इति पाभे.।

g) पाठः? RW.W. B [६७७] प्रमृ. **न-घ-मारः** इति पदमेकम्। *न-घ– [विप. (कुष्ठ- [ओषधि-विशेष-] बस. उप. भाप.<√हन् इति)] >-घः इति, *अ-मार– (उप. भाप. <√मृ इति) >-रः इति च द्वे पदे इति कृत्वा **नघोऽमारः** इति **शोधः** द्र. (तु. तत्रैव **त्रीणि नामानि**; वैतु. शंपा. सात. पपा. च सा. नघ° इति तच्च लैवि. इव स्यात्)।

h) **न**, **घ**, **अयम्** इति त्रिपदं द्र. (तु. सपा. पै [७,१०, २-४], RW.; वैतु. शंपा. सात. च **नघायम्** इति ?)।

i) पाठः? RW. W. B. प्रमृ. <**न-घ-रिष**–। (*न-घार– [भाप.]>तद्धितः) **नघारिक्, का**– (विप.[ओषधि-, कुष्ठ-] इति)> -कः, –काम् इति शोधः (वैतु. शंपा. सात. सा. नघारि° [पपा. नघ-रि°] इति च) [g टि. अपि द्र.]।

j) तु. सस्थ. टि. ?कामपराजिताम् [यत्र नघ-घारकम् इति शोधार्हम्]।

k) पाठः? न चेत्थाऽभि माऽसत, वृक्षे इति शोध इति कृत्वा पृ १० सस्थ. १अक्ष–> -क्षे इति निर्देशो नेष्टः।

l) नाप. (तृण-भेद-)। व्यु. ?। पपा. नावग्रहः। अन्तश्छेदमधिकृत्य <√*नड् [भेदवत्त्वे] इति मतम्।

m) सपा. पै **१**,६७,४ ?ननवैः इति पाभे.।

n) विप. च नाप. च। मत्वर्थे ड्वलच् प्र. उसं. (पा **४**, २,८८)।

o) पाठः? अनडुद्-व्रत–> -°तिन्–> -ती इति शोधः (तु. पै **१७**, २७, ४; वैतु. BKA. यनि. इति ?, र. °द्ब्र° इति ?)। सस्थ. कृता, तरति, येन इत्येषां स्थाने यथाक्रमं कृत्या, चरति, यद् न इति शोधाः द्र.।

p) पाठः? नक्त– > -क्तम् इति शोधः। सस्थ. ?दुष इत्यत्र टि. अपि द्र.।

q) पाठः? न त्वा (त्वाम्) वस्ते(<√वस [आच्छादने]) इति त्रिपदः शोधः।   r) तु. सस्थ टि. आ।

†नद्[a]– -दम् ऋ १, ३२, ८; ८, ६९, २[२]; कौ २, ८६२[२]; जै ४,२५,२[२]; पै१३,६,८; –दयोः[b] ऋ १०,१०५,४; –दस्य ऋ १, १७९,४; २, ३४, ३; १०,११, २; शौ १८,१,१९.

नदी– -दी ऋ १, १३५, ९[c]; शौ १,८,१; ९,१२, १४; १२, ३, २७; पै ४,४,८; १६,१३९, १६; –दीः शौ ३, २४, ३; पै ५, ३०, ६; ७, १३, १०; १५, १९, ९; १९,३८, ९; –दीनाम् ऋ २, १५, ३; १९,२; ३,३३, ६;१२;५,५२,७;५४,२; ६,१७, १२; ३०, ३; ७२, ३; ७, ३४, १०; ११; १६; ८७, १; ९५,२; ९६, १; ८, ६, २८; २६, १८; ३१, ⌊(१८,१६) १०⌋;९६,११; १०,१३९,६; मा १३, ४२;२६, १५†; का १४, ४,५; तै२, ३, १४,५†; ४, २, १०, १; ६,२, ६; मै २, ७, १७; ४, ९, ११; १४, ७†; काठ १२, १५†;१६, १७;कौ १,१४३†; जै १, १५, ९†; शौ १,१५,३; ६,५२,२‡[d]; ११३,२; १४, १, ४३; १८,३, ५[e]; पै १, १११, २; २,१९, १; ६१,१; १५,८,५; १८, ४,१०; १९, ३३, १२; २०, ५२, ३; –दीभिः ऋ ५, ४१, १९; शौ १९,१९,६; पै ५, ३५, ७[२]; ७, १४, ७; ८, १७, ७; १९, ४८, १६; –दीभ्यः मा ३०, ८; का ३४, १, ८; पै १, २४,३; १५, २३, १३; १९, २४, १५; ४८, १३; –दीम् शौ ४,३७, ३; पै १३,४,३; –दीषु ऋ ७,५०, ३; ८,२,२; ३३,१२;५३,⌊४; ६३, १७⌋; ६८, ६; ७६, १; ८८, ५; १०७, १३; मा १७, ६[e]; का १८,१,७[e]; तै ४, ६, १,२[e]; मै २, १०,१[e]; काठ १७, १७[e]; क २८, १[e]; †कौ १, ५५८; २, ८५; ११८; ५७८;१०६७; †जै १, ५७, ५; ३,८, ११; १२,५; ४७, ४; ४, ७, ४; २०,५; शौ ४, ३६, ५; पै १९,३०,९; २०, १५,१; –द्यः ऋ १,५४,१;१०; ५५ २; ६२,६; १०२,२; १३०, ५;१५८,५;१८१,६; २,३५,३; ३,३३,४;४,१६, ⌊२१;१७-२४, ११(५६,४)⌋; ५५,६; ५, ४२, १२; ४५,२; ४६,६;४७,५;५५, ७; ७, ५०,४; ६०, ७; ८, ९६, १४; ९,९,४; ८६, ८; ९२, ४; १०, २८, ४; ६४, ८; ९५, ७; खि ३, २२, ९; मा ३४, ११; का ३३,१,५; तै २,५,१२, २†; ५,६,१,२; मै २, ७, १३; १३, १[२];†; काठ ३५,३†; ३८,१२; ३९,२; ४०,१३; कौ ३, ३,६†; जै २,१,६†; शौ ३,१३, १; ६, १२,३; २४,३; ७,३९,५; ११, ८,१०; १४, २, ७; १९,१,१[f]; २०, १३७, ८†; पै २, ७९, ५; ३, ४, १; १९, ६; ६, १८, ८; ९,२३,१६; १३, १२, ७; १५, १४,३; १८,७,८; १९,४,६;७, १०;२६,६; –†द्यम् ऋ १,१३१, ५[g]; शौ २०, ७५, ३; –द्यां ऋ २,३९,५; –द्याः पै १९, ३२,६.

नादेयु[h]– -यान् तै ७,३, १४,१[i]; –याय मा १६, ३१[j]; ३७[k]; का १७,४,५[j];६,१[k].

नादेयी– -यीभ्यः तै ७,४,१३,१; काठ ४४, २.

नाद्य,द्या[l]– -†द्यः ऋ २, ३५,१; मै ४,१२,४; काठ १२, १५;–द्यान् काठ ४३,४[i]; –द्याय तै ४,५,७,१[k]; मै २,९,६[k]; काठ १७,१४[j];१५[k]; क २७,४[j];५[k].

नदी-तमा– -॰मे ऋ २,४१, १६.

नदी-पति– -तये मा २४, ३४; का २६,७,४; मै ३,१४,१५; –तेः मै ४,४,१¶.

नदी-वृत्[m]– -वृतम् ऋ १, ५२, ⌊२;८,१२,२६⌋.

नदत्– -दतः शौ ४, १५, १; ५; पै ५,७,१.

---

a) विप. नाप. व्यप. च । यदा सरित्-पर्यायो भवति, तदा धा. जल-वाहने वृत्तिः सुवचा स्यात् । एवमर्थान्तरेषु यथायोगं धा. वृत्तयो विभियन्ताम् ( तु. टि. नदनु–; वैतु. या ⌊२, २४; ५,२⌋ प्रभृ. सामान्येन शब्दे वा स्तुतौ वा धा. वृत्तिरिति ?) । b) पामे. कृते पृ १५९१ *j* टि. द्र. ।
c) स१ रूपम् (पा १,१,१९) । d) सपा. ऋ १, १९१,४ विशिष्टः पामे. । e) सपा. नदीनाम् <> नदीषु (माश ९,१,२,२७ च) इति पामे. ।

f) सपा. नद्यः <> सिन्धवः <> पशवः इति पामे. ।
g) सा. भाप. (समृद्धि-) ।
h) विप. । तत्रभवार्थीयः ढक् > एयः प्र. (पा ४,२,९७) ।
i) सपा. नादेयान् <> नाद्यान् इति पामे. ।
j) सपा. नादेयाय <> नाद्याय <> स्रोतस्याय इति पामे. । k) सपा. नादेयाय <> नाद्याय इति पामे. ।
l) =नादेय- । ड्यण् प्र. (पा ४,४,१११) तत्स्वरश्च ।
m) विप. (वृत्र-) । उस. उप. < √ वृ (आच्छादने) ।

*नुदन[a]–

नदनिमुन्[b]– -मा शौ ५,२३,८.

†नदनु[c]– -नुम् ऋ ८, २१,१४; कौ २,७४०; शौ २०,११४,२.

नदनु-मुत्– -मान् ऋ ६, १८, २; काठ ८,१७†.

†नदुयत्– -यन् ऋ७,७,२[d];९,९७, १३; कौ २,१५६; जै ३,१५,४.

नादु[e]– -दम् शौ १९,३४,३?[f]; –दे ऋ १०,११,२; शौ१८,१,१९†.

नाम्दन्– -नम् पै २०,४५,२.

नुानदत्– -दत् ऋ १,१४०, ५; ८; ३,२,११; ९, ७०, ६; मा ११, ४६; का १२, ४, ९; तै ४,१, ४,३; ५, १,५,६¶; मै २,७,४; काठ १६,४; क ३०,३; –दतम् ऋ १०, ६७, ९; शौ २०, ९१, ९†; –दद्भिः ऋ १, ३०,१६; ६,६,२; तै १,३,१४,४†.

नुानदती– -ती शौ १०,१,१४; पै १६,३६,४.

नदु–, नदुी– √नद् द्र.

?न दी यं वं तु काः व तीं[g] पै १३, १,१३.

नद्धु– √नह् द्र.

नुध्[h]– नद्भ्यः ऋ १०,६०,६.

?न ध री र शा री र्[i] पै १०,५,१२.

?नधा[j] पै ११,५,१०.

?ननत्वैः[k] पै १,६७,४[l].

ननुमः √नम् द्र.

ननुा[m]– -ना ऋ ९,११२,३.

नुनान्दृ[n]– -न्दरि[o] ऋ १०, ८५, ४६[p]; –न्दुः शौ १४, १, ४४‡[p]; पै ४, १०,३; १८,५,१‡[p].

?न निर्दं ऋचायच पै ९, ११,१३.

ननु न द्र.

?ननोऽभ्यमा[q] पै १९,३६,८.

नुन्त्व– √नम् द्र.

√ नन्द् ,नन्दन्ति ऋ १०,७१,१०; शौ १९,५३,७; पै १२,२,७;७,९.

१नुन्द[r]– -न्दम् पै ८,१०,६; –न्दाः पै १६, ८७, ४[s]; १९, ५०, ८;

---

[a]) कर्तरि ल्युः प्र. (तु. या ⌊५,२⌋)।

[b]) भाप.। ताद्धितः इमनिच् प्र. (तु. W. B.; वैतु. PW. MW. विप.?)।

[c]) भाप.। धा. बन्धनहिंसनाऽन्यतरेऽर्थे वृत्तिः स्यात्?। (तु. सस्थ. टि. *?समूहस्य; वैतु. नाप. इति कृत्वा निघ ⌊२, १७⌋ प्रभृ., GW. GRV. संग्राम-पर्याय इति, वें. स्तोतृ-पर्याय इति?)। अनुच् प्र. उसं. (पाउ ३,५२)।

[d]) धा. दीपने वृत्तिः (तु. सस्थ. शुष्म->-ष्मैः, सानु->-नु; वैतु. शब्दवृत्तयोऽन्ये)। तु. सस्थ. टि. आ।

[e]) भाप.। घञन्तेऽन्तोदात्तः।

[f]) पाठ? सपा. नादम्<>?नाडम् इति पाभे.।

[g]) पाठः? ना (न अ)र्कं वि(द>)दाः नो (न ऊ) र्मिधाराः, नदीः याः वर्तुका-वतीः इति शोधः। सस्थ. ?इमा इत्यस्य स्थानेऽपि पुनः इति शोधः।

[h]) नाप. (*भगिनी-सुत-)। व्यु.?। *स्वस्री- (=स्वसृ-) >नैप्र. स्वन्नी->नी+(√वृध् ⌊सन्ततौ⌋>) *वृध्- (=सुत-)>षस. नी-वृध्-> नैप्र. नृध्-> यनि. (वैतु. वें. सा. <√नद् ⌊नन्दने⌋ इतीव कृत्वा नन्दयितृ-पर्याय इति, PW. GW. L. ⌊४०८⌋ < √नह् इति कृत्वा बन्धु-पर्याय इति, WAG ⌊१,२३४⌋, L. ⌊४८३⌋, ORN. नुपात्-> नैप्र. *नुब्द्->यनि. इति च?)।

[i]) पाठः? त्वम्,अथ रयिरसि रयिम् इति पञ्चपदः शोधः (तु. सपा. शौ १९,३१,१२)। अत्र त्वम् इति पदं तृतीयस्य पादस्याऽवसानमिति कृत्वा सस्थ. मयि इति पदं मे इत्येवं शोध्यम् (तु. सपा. शौ.)। सपा. शौ. अपि ?धारयाधि इति पाठः?। तत्र धारय, त्वम्, अथ इति त्रिपदः शोधः द्र.।

[j]) पाठः? तथा इति शोधः?।

[k]) पाठः? (√तन् ⌊विस्तारे⌋>कर्तरि) तत->भावे *ततत्व->-त्वैः तृ३ इति शोधः। यद्वा कर्तरि क्नुः प्र. उसं. (पाउ ३, ३५) इति कृत्वा *त्नन-> नैप्र. *नन->भावे ननत्व->तृ३ यनि. (=विस्तारैः) इति।

[l]) पाभे. कृते पृ १७६३ *m* टि. द्र.।

[m]) नाप. (जननी-)। व्यु.?। पपा. नावग्रहः। या ⌊६,६⌋-प्रभृ. < √नम् इति; दे ⌊१, ११⌋ < नग्ना- (इतीव कुतश्चित् पाभे. लब्धसंकेतः?)। (√जन्>जनि+ कर्तरि क्युच् प्र. उसं. ⌊पाउ ३,२०⌋>) *ज्न(न>)ना- >नैप्र. यनि. इति स्यात्।

[n]) नाप. (पत्युर्भगिनी-)। व्यु.?। पपा. नावग्रहः। <न + √नन्द् इति (पाउ २,९८)। नृ- (पति-)+ (√*नान्ध् ⌊बन्धने, बन्धुभावे⌋>भावे *नान्ध्र->नैप्र.) *नान्दृ-> बस. पूप. स्वरे > यनि. इति तु स्यात्। 'पतिद्वारको बन्धुभावो यया' इति भावः।

[o]) छन्दस्तः °न्द्रि इति संभाव्येतेति GW. (तु. पाभे.)।

[p]) सपा. ननान्दरि (मंब्रा १,२,२० आपमं १,६,६ च) <>ननान्दुः इति पाभे.।

[q]) पाठः? यश्चाऽपापिनो नोऽभ्यमात् इति पाद-शोधः।

[r]) भावे घञ् प्र. ञित्स्वरश्च।

[s]) सपा. नन्दाः<>मोदाः इति पाभे.।

–न्दान् शौ १०,२,९.

नन्द-बलं[a]– -०ल काठ १३, ९; पै १६,६०,१.

२नन्दु–

नान्द्य–

नान्दी[b]– -न्द्यम् ऋ १,३४, ४; –न्द्यै ऋ १,१४५,४.

नन्दत्– -न्दन् पै ९,१७,६.

नन्दथु[c]– ·थुना[d] तै ५,७,१९,१.

नन्दन[e]–

नान्दन[f]– -नम् खि ३, १०, ६; कौ २,६५३.

नन्दिन्– -न्दिनः पै १०,४,५.

?न न्द सो द ल म न्त क जि ष्णु हा[g] पै २,८५,१.

?नन्दीमानं[h] खि ४,५,४०.

नन्नमत्–, नन्नमान– √नम् द्र.

नपात्[i]– -पात् ऋ १, १४३, १; २, ३१,६; ३५,१;२; ७; ९; १०[j]; १३; ६,५०,१३; ५२, १४; ७, ३५, १३; ४७, २; १०, ८, ५; ३३, ७; ९२, १३; खि ५,७,४, १५; मा ८,२४; का ९,४,२; तै २, ५, १२, १†; मै १, ३,३९; २,१३, १†[j]; ४,५, २¶; १२, ४[2]†; काठ ४,१३; १२,१५†[2]; २२, २[k]; ३५, ३[2]†; क ३,११; ४८, ४[2]†; कौ ३;३,९†; जै २, २,४†; शौ १९,११, ३†; पै ४, १७,३?[l]; २४,२; १३,८,१३†; –०पात् ऋ १, ४२, १; ५८, ८; २, ६,२; ४, ३२, २२; ५, १७, ५; ६, १६, २५; ५५, १; ८,१७,१३; ७१,३;९; ८४, ४; १०,२०, १०; ३०, ४; ३३,७; ११५, ८; १४०, ३; १४९, २; खि ४,४,२; ३; ५,७, २, ११; मा ६, २७; १२, १०८; २१, ६१; का ६, ७, ४; १०, २, २; १३,७, ७; २३, ६, १४; तै १, २,३,३; ३, १३,२; ४, ४५, १; ७,७,२; २, ४, ८, १; ४,२,७, २; ६,१,४,९; ४, ३,३; मै १, २,३; ३,१; ११,१; ६; २,४,७; ६, ७[2]; ७, १४; ३, ६, ९; ४, १३,९; काठ २, ४; ३,९; ११, ९; १३, १४; १४, ६; १५, ६; १६,१४†; १९, १३; २३,६; क १,१६;२,१६;२५,५†; †कौ २, ७७;८९९; ११६८; †जै ३, ८, ३; ४, १४, ३; शौ १, २३,२; ३; २६,३; ६,३,१; ३; १४,१, ३७†; २०,५,७; पै ३, ३१,५; १८, ४, ६†; १९, १,१४; १६; ३,४; ५; ७; –पातः ऋ ३,६०, ३; ६, ५०, १५; ८, ६५, १२; –०पातः ऋ १,१६१,१४;४,३४, ६; ३५,१;८; ३७,४; –†पातम् ऋ १,२२, ६; ३७, ११; १२२, ४; १८६,५, २, ३५, ३; ३,९, [१;८,१९,४]; २७,१२; ५,३२, ४;४१,१०; ६,२०,११;४८, २; ७,१६, [१; ८,१९,४;४४,१३]; १७,६;३४,१५; ८,६०,२; १०, १०,१;१५,३; ३०,३; मा १५, ३२;१९,५६;२७,४४; का १६, ५,१४;२१,४,७;२९,५,१२; तै १, ६,१२,४$; २,५,१२,२;४, ४,४,४; मै २, १३,१;८;९; ४, १०,६; काठ २१, १४; ३५,३; ३९, १२;१५; कौ १,४५; ६२; ३४०;२, ५४;९९;७६४; ९०३; १०६२; ३. ३, ६; जै १, ५,१; ६,८;३५,९; २,१,६; ३,५,१३; १०,१; ४,२५,५; शौ १८,१,१; ४५; १९, ४२,४$; २०,१०३, ३; –पाता ऋ १, १८२, १; १८४,१; ८, २५, ५; १०,६१,

[a]) विप. (⌊*शब्दकृत्-⌋ इन्द्र-)। उस.। पूप. धा. शब्दे वृत्तिः (तु. सपा. नर्द-बुद– > -०द इति पाभे.)। उप. (√भृ ⌊*कृतौ⌋>कर्तरि) *भृत– > नैप्र. यनि.।

[b]) कर्तरि अजन्तात् भावे ष्यञ् प्र. ततः स्त्री. च ङीष् (तु. स्क. ?, द. ⌊अन्तिमे स्थले⌋, PW. GW. प्रभृ; वैतु. वें. सा. नान्द्य– इति)।

[c]) भाप.। अथुः प्र. उसं. (पा ३,३,८९)।

[d]) पाभे. कृते पृ ६५६ *d* टि. द्र.।

[e]) नाप. (स्वर्ग-)। कर्तरि ल्युः प्र.।

[f]) स्वार्थिकः अण् प्र.।

[g]) पाठः? (तु. पृ २२७ *j* टि.)।

[h]) पाठः? *कुविद् *रन्ते सुखं *रुद्रः नन्दी मे(मा ए) नं *विमथ्य ह इति शोधः।

[i]) नाप. (पौत्र-)। व्यु. ?। पपा. नावग्रहः। < √नम् इतीव या ⌊८, ५⌋; < न + ⌊ √पा ⌊रक्षणे⌋ इति पाका ⌊६, ३, ७५⌋; न + √पत् ⌊पतने⌋ इति सा. प्रभृ.; अन्ये < √ *नप् ⌊बन्धने⌋ इतीव ⌊तु. पाउ २,९५, Mac. Bhaṇḍ. Comm. १८, SEY १३३⌋)। (√जन् > कर्तरि के प्र.) *ज्ञ– >नैप्र. *न– (प्रजा-)+( √*आध् ⌊संताने⌋ >भावे ) *आध्– > नैप्र. *पात्– (प्रजाति-) >बस. *न-पात्– (प्रजायाः प्रजातिमत्-) इति तु स्यात्।

[j]) =सपा. या ३,१६। आपश्रौ १६,३३,४ तु पतिः इति पाभे.। [k]) सपा. नपात्<>नपात्कः इति पाभे.।

[l]) नषात् इति पाठः? यनि. शोधः।

४; -०पाता ऋ १,११७, १२; ३,३८,५; ४, ४४, २; शौ २०, १४३,२.

नपात्-क्[a]- -कः तै ५,४,१०,४¶[b]; ?नपास्योश् चगे पै ६,१४,६.

¶न-पुंसक[c]- -कः, -कम्[५] मै २,५,५.

नप्ति, प्ती[d]- -प्तिः शौ ९, १, ३; १०; पै १६,३२,२; १०; -प्तीः ऋ ९, ६९, ३; -प्तीभिः ऋ ९, १४,५; -प्त्यः[e] ऋ १,५०,९[f]; काठ ९, १९†[f]; शौ २,१४, १; ७,८७,६; १३,२, २४†[f]; २०, ४७,२१†[f]; पै २, ४, १; १८, २२, ९†[f]; -प्त्यम् ऋ ३, ३१, १[g]; शौ १,२८,४; -प्त्या ऋ ८,२, ४२; -†प्त्योः ऋ ९, ९,१; कौ १, ४७६; २, २८५; जै १,४९,१०; ३,२४,१.

नप्तृ[h]- -प्तारम् तै १, ३, ११,१; काठ ३, ८; क २, १५; -प्तुः ऋ २, ३५,११; ७,१८,२२; -†प्तृभिः ऋ १०, ८५, ४२; शौ १४, १, २२; पै १८,३,१; -प्त्रा ऋ ६, १३,३; १०, ३०,१४; -प्त्रे ऋ २,३५,१४; ५, ७,⌊१; ८,१०२, ७⌋; मा १५, २९†; का १६, ५,१०†; तै १, ८, १६, २; २, ६,११,४†; ४,४,४,४†; ५,५, १३, १; मै २, ६, १३[२]; ४, ४, ७[२]; ११, १†; काठ २, १५†; १५, ८[२]; ४७,३; †कौ १, २१; २, २९६; †जै १,३,१; ३, २४, १२.

नप्त्री[i]- -प्त्रीम् पै ५, १, ३; १०, १,२; -प्त्र्यः कौ ३,५,१३‡[f].

?न बभ्रु[j] खि ४,७[२],८.

√नभ् (बधा.) †नभन्ताम् ऋ ८, ३९,⌊१-१०; ४०, १-११; ४१, १-१०; ४२, ४-६⌋; १०,१३३, ⌊१-६⌋; तै १,७,१३, ५; ३, २, ११, ३; मै ४, १२, ४; कौ २, ११५१-५३; जै ४, १,४-६; शौ २०,९५,२-४.

नभ्[k]- नभः ऋ १,१७४,८[l].

नभनु,नू- -नूः ऋ ५,५९, ७[m]; -न्वः ऋ ४, १९,७[n].

†नभन्य[o]- -न्यः ऋ १, १४९,३[p]; कौ २, ११२४; -न्यम् ऋ १,

a) विप. (अग्नि-) । इवार्थे कः प्र. ।

b) पाभे. कृतं पृ १७६६ *k* टि. द्र. ।

c) नाप. (*पुंस्त्व-रहित-)। तस. पूप. स्वरः । नञ् इति पूप. । उप.? *स्त्री-पुंस- > *पुंसक- इतीव पाका ⌊६, ३,७५⌋ प्रभृ. । पुं. पर्यायः *पुंसक- इति तु मतम् ।

d) नाप. स्त्री. (नपात्-)। व्यु.?। पपा. नावग्रहः । *न- ⌊तु. नपात्-⌋ इति पूप., (√ *आध् ⌊संताने⌋> कर्तरि) *आधि,धी- >नैप्र. *प्ति,प्ती- (प्रजा-) इति च उप.>षस. अन्तोदात्तः (वैतु. स्त्री. <नपात्- इतीव W.AG ⌊१,६९⌋, MVG ⌊२५, २*a*⌋ प्रभृ.)।

e) वैतु. सा. <नप्त्री- इति ।

f) सपा. नप्त्यः<>नप्त्र्यः<>तैब्रा २,४,५, ४ नप्त्रियः इति पाभे. ।

g) वैतु. सा. <नप्त्र्य- इति ।

h) =नपात्- । नाप. । व्यु. ? । पपा. नावग्रहः । *न- ⌊तु. नपात्-⌋ + (√*आध् ⌊संताने⌋ >भावे *आध- + √*भृ ⌊प्रजाभावे⌋ > भावे > षस.) *आध-भर-> बस. *न-आधभर->नैप्र. यनि. (वैतु. पाउ ⌊२,९५⌋ <√नप् + तृन् प्र. इतीव) ।

i) स्त्री. ङीषर्थं गौरादित्वम् उसं. (पा ४,१, ४१ ⌊तु. क्रोष्टृ->०ष्ट्री-⌋) ।

j) पाठः? । सपा. शौ ५,५,८ पै ६,४,८ अजबभ्रु इति पाभे., तबभ्रू इति मूको. ।

k) भाप. स्त्री. [हिंसा- (तु. वें. सा. PW.GW. GRV.; वैतु. सा ⌊पक्षे⌋ कर्तरि प्र. इति कृत्वा नाप. ⌊शत्रु-⌋ इति, LR. MW. Gri. क्विप. इति)] । वा.? (पृ ६२६ *q* टि. द्र.)।

l) शोधार्थं तु. सस्थ. टि. आ √गा>आगुः ।

m) नाप. (*शृङ्ग-) । व्यु.?। उद् √नभ् > नैप्र. यनि. धा इति चाऽस्य 'नमने' वृत्तिरिति च कृत्वा *उन्नभ-स्नु- (=*उन्नमस्नु- ⌊<उद् √नम्⌋) > नैप्र. यनि. [तु. ऋ ⌊१, ६४, ११⌋, ⌊अंशतः⌋ ?ORN. (=⌊पर्वतस्य⌋ विदीर्ण-खण्ड- इति); वैतु. सा. =उदक- इति ⌊तु. PW. प्रभृ. =जल-प्रपात-, निर्झर- इति⌋ ] ।

n) नाप. (*स्तोत्री- ⌊ऋषिका-⌋)। व्यु. ?। नभन्य- ⌊स्तोत्र-⌋> √नभन्य > यनि. (तु. ⌊अंशतः⌋ ?ORN. =⌊विकसित- यौवना-⌋ स्त्री- इति; वैतु. निघ ⌊१,१३⌋ नाप. ⌊नदी-⌋ इति ⌊तु. PW. प्रभृ. स्त्री. रूपमिति *m* टि. विशेष इति⌋, धा. हिंसार्थे वृत्तिं मत्वा वें. नाप. ⌊सेना-⌋ इति, सा. विप. =हिंसिका- इति च) ।

o) धा. शब्दे वृत्तिरिति कृत्वा यनि. विप. नाप. च ।

p) शब्दवदर्थेऽश्वाग्न्योः सामान्यसमर्पकं विप. स्यात् ? (वैतु. वें. सा. वायुपर्यायभूतनभस्वदर्थे नाप. इति कृत्वा <नभस्- इतीव ?) ।

१७३, १[a]; –न्यस्य ऋ ७, ४२, १[b].

नभस[c]– -मः ऋ १,७१,१०;३,१२, १; ५,४१,१२; ८३,३; ७,९७, ६; ८,९,८;९६,१४; ९, ७१,१; ७४, ४; ८३, ⌊५ (८६, ४०)⌋; ९७,२१; खि ४, ७, १; ७[२],१; मा २, २२; ५, ९[३]; ३२[d]; ६, २१; ७, ३१†; १४, १५; २५, ८; का २, ५, ५; ५,३, २[३]; ८, ४[d]; ६,५,१; ७,१३, १†; १५, ४,३; २७, ८, २; तै १, २,१२, १; ३,११,१; ४, १४, १; १५, १†; २, ४, ८, २; ३, ५, ५,२; ४,३,११,३; ४, ११, १; ५,७, १६, १; ६, २, ७, २; ४,१,३; ७, ५, २५, १¶; मै १, २, ८; १२[d]; १८; ३, १७†; २६; २, ८,१२; १३,१०; ३, ८, ५[२]¶; १०, ७†; १५, ७; ४, २, १¶; काठ २,९; १३[d]; ३,८; ४,७†; ११, ९; १७, १०; १८†; २५, ६[२];¶; ३५, ६†;९; ३९,१०; ५३, ६; क २, ३; ७[d]; १५; ३, ५†; २६, ९; ३९, ३[२]; ¶; ४८, ७†; १०; †कौ २, १९; †जै ३,२, १०; शौ ४, १५, ५; ५, ५, १; ७, १९, १; १३, ४, २-७; ९;५,१; ६,१; २०,१३७, ८; १४०, ३†; पै ५,७, ४; ६, ४, १; १६,३४,३:४; १९,५२, १†; २०, ७, ३; –भसः ऋ १, १६७,५; तै ३, ३, ८, ६¶; शौ ६, ७९, १[e]; १८,४,१४; पै ८, ८, २; १९, १६, १७; १८; –०भसः तै ३, ३,८, ३; ६; शौ ६, ७९, २; पै १६, १५०, ६; –भसा ऋ ९, ७१, ३; ८६,१४; तै ३, ३, ८, २[e]; ५[e]; ६¶; ४, ३, ११, ५; काठ ३९, १०; शौ ५,१३,३; –भसी काठ ३५,९; क ४८,१०; शौ ५,१८,५; २०, ७; ११,७,८; ११; १२, ३, ५; ६; १७, १, १६; पै ९, १७,७; २४,८; ११,५,११; १६,१५३, ९; १५४, १; १७, ३६, ५; ६; १८, ३१, ८; –भसे मा ७,३०; २२, ३१; का ७, १२, १; २४, १८,१; मै १, ३, १६; ३, १२, १३; काठ ४,७; क ३,५; –भांसि मै ४, २, १¶; शौ ४, १५, ३; पै ५, ७, २; –भोभिः ऋ २,४, ६; शौ ६, ६२,१; पै १०,९,५; १९,३०,४; –भोभ्यः तै ७, ४, १४,१; काठ ४४,३;

नभस[f]– -‡[g]सः शौ ९,४, २२; पै १६,२६,२.

नभस-मय– -यम् ऋ ९,६९,५.

नभस्य[h]– -स्यः मा १४,१५; का १५,४,३; तै १, ४, १४,१; ४, ४, ११, १; मै २, ८, १२; काठ १७, १०; ३५, ९; क २६, ९; ४८,१०; पै ४, २४,२; –स्याः[i] खि ५, ५, ९; –स्याय मा ७, ३०; २२,३१; का ७, १२, १; २४,१८, १; मै १, ३, १६; ३, १२, १३; काठ ४,७; क ३, ५.

नभस-वत्[j]– -वतः शौ ४, १५, १; ५; पै ५, ७, १; –वान् मा १८,४५; का २०, २, ८; तै १, ३,३, १[d]; ४, ७,१२, ३; ५,४, ९,४; मै २, १२, ३; ३, ४, ३; काठ १८,१४; २१,१२; क २९, ३; जै ३, ५४, ७; पै २, ६९, १-५.

---

[a]) विप. ( ⌊शब्दवत्-⌋ सामन्- ⌊वैतु. वें. सा. च नभोव्यापकार्थे <नभस- इति वा हिंसकार्थे <√नभ् इति वा ?⌋)। सस्थ. वे: इत्यत्रत्यं टि. अपि द्र.।

[b]) नाप. (स्तोत्र- ⌊तु. सा.; वैतु. GW. ORN. GRV. मूलतोऽश्व-पर्याय इति⌋)। सस्थ. ϕप्र-वेतु इत्यत्र टि. द्र.।

[c]) नाप. ( दिव्- प्रभृ. )। धा. दीप्त्यादौ वृत्तिः (तु. या ⌊२,१४⌋ SEY ⌊३८⌋ PW. GW. प्रभृ. ⌊तु. WAG१,७ c अभ्र–, अम्भस– इत्येताभ्यां सन्यायतेति⌋; वैतु. पाउ ⌊४, २११⌋ <√नह् इति, या ⌊पक्षान्तरे⌋< √नी वा न + न + √भा वेति, भा ⌊पक्षे⌋ <न+ √भा इति, जैमि ⌊१,३०⌋ <अ+भी– ⌊<√भी⌋ इति च)।

[d]) सपा. नभः (तां १,४,३ लाश्रौ २,२,१२ च)<> नभस्वान् (शांश्रौ ६,१२,८ आपश्रौ ११,१४,१० च) इति पाभे.।

[e]) सपा. नभसः (गोब्रा २, ४,९ वैताश्रौ ३१, ४ कौसू २१,७ च)<>नभसा (आपश्रौ १३, २४, १९ च) इति पाभे.।

[f]) विप. [ऋषभ- (वृषोत्सर्गे विनियोगः ⌊तु. कौसू २४, १७⌋)]। मत्वर्थीयः अच् प्र. चित्स्वरश्च ( वैतु. पाउ ३, ११७ =आकाश- इति)।

[g]) सपा. नभसः<>सुभरः ( आश्रौ ३, ८,१ शांश्रौ १३, ४, २ शांगृ ५,८,२ च) इति पाभे.।

[h]) नाप. (मास-विशेष- ⌊भाद्रपद-⌋)। मत्वर्थीयः यत् प्र. (पा ४,४,१२८)। [i]) =माससंबन्धिनो मरुतः।

[j]) विप. (वायु-, ऋषभ-, प्रदिश्-, वृष्टि- प्रभृ.)।

नभस्वती- -ती पै १९, २८, ७; -तीः ऋ ८, २५,६; शौ ४, १५,१.

†न(भस्>)भो-जा[a]- -जाः ऋ १०, १२३, २; -जाम् ऋ १०,३०,९.

न(भस्>)भो-जू[b]- -जुवः ऋ १, १२२,११.

न(भस्>)भो-रूप[c]- -पाः मा २४,३; ६; का २६,१,६; २,१; तै ५, ६, १९, १; मै ३, १३,४; ७; काठ ४९,९.

†न(भस्>)भो-विद्[d]- -वित् ऋ १०, ४६, १; कौ १,७७; जै १,८,५.

नभ[e]-

नभ्य[f]- -भ्यम् तै ७, ४, ११, २¶; काठ ३३,३¶[g]; शौ ६,७०, ३; १२,१,१२; पै १७,२, ३; १९, ४४, १६[3]; -भ्यानि ऋ १, १६४, ४८; शौ १०, ८, ४; पै १६, १०१, ७; -¶भ्याभ्याम् काठ २५, ८; ४०,१; -?भ्येव[h] ऋ २, ३९,४.

नभनु,नू-, नभन्य-, नभस्- प्रभृ. √नभ् द्र.

नभाक[i]-

नाभाकृ[j]- -कस्य ऋ ८, ४१,२.

नभाक-वत् ऋ ८,४०,४;५.

न-भ्राज्[k]- -ऽभ्राट्[l] मै १, २,५;३,७, ७¶;८,१०; काठ २,६; २४, ६.

√नम्,>नमि, नन्नम्, नन्नम्, नमते ऋ ६,२४,८; ¶नमति तै ४, ६, २,४;¶नमति मै३,८,४[2m]; काठ ८,१०[m]; क ७, ६[m]; नमेते ऋ २, १२,१३[n]; शौ २०,३४,१४; नमन्ते ऋ ४, ५०, ८; १०, ३४, ८; †नमन्ति ऋ ८, ९७, १२; कौ २, २८१; जै ३, २३, १३; शौ २०, ५४, ३; नमामि खि २, ६[2],२५[o]; पै १, ४४,२; १३,१३,५; नमन्त ऋ ५, ३२, १०; १०, ३०, ६; काठ १३, १६†; पै ३, २७, २; नमन् पै १३, ५,१९; ¶नमतु[m] काठ ८, १०; क ७,६; नमन्ताम् ऋ १०, ५१,९; १२८,१; मा १२, ३५; का १३,३,६; तै ४, २, ३, २; ७, १४, १†; मै १,४,१†; २, ७,१०; काठ ४,१४†; १६,१०; ४०, १०†; क २५, १; शौ ५, ३,१; ९,२,११; पै ५, ४, १†; १६,७६, १०; नमन्तु शौ ४, ३, १; पै २,८,१; नमध्वम् ऋ ३, ३३,९; ७,५६,१७; ¶अनमत्[m] काठ ८,१०[3]; क ७, ६[3]; ¶अनमन्त मै ४, ५, ४; †अनमम् ऋ १, १६५, ६; मै ४,११,३; काठ ९,१८; ¶नमेत्[m] मै ३,८, ४[2].

†नेमे ऋ १, ५७, ५; शौ २०, १५, ५; नानाम[p] ऋ १, ४८,८; ४,२५,२; नंसन्ते ऋ ७, ५८,५; ¶अनान्[m] काठ ८, १०[2]; क ७, ६[2].

अनमयत् ऋ ७, ६,५; ¶नमयेत् काठ २६,५; क ४१,३; ?ननमः[q] ऋ १, १७४, ⌊८; २, १९, ७⌋; नीनमः ऋ ८,२४,२७.

नन्नते[r] ऋ १,१४०,६; नन्नमीति तै ४, ७, १२, २; मै २,१२,१; काठ १८, १३[2]; क २९, २[2]; नन्नमीति ऋ ५,८३,५; अनन्नत

a) विप. (⌊पर्जन्य-ज-⌋ उत्स-, वेन-)। उस.।

b) विप. (⌊*द्यु-वर्तिन्-⌋ देव-)। उप. =*द्यू- (< √दिव् ⌊*वर्तने =निवासे⌋ कर्तरि) > नैप्र. यनि. (तु. सा. GW.; वैतु. ORN. Gri. < √जु ⌊शीघ्रगतौ⌋, वें. यनि. वायु-पर्याय इति कृत्वा नाप. इति?)। शेषं ?निरवस्य इत्यत्र टि. द्र.।

c) विप. (⌊मेघ-सदृश-⌋ पशु-)। बस.।

d) विप. (अग्नि-)। उस.। पूप. =अन्तरिक्ष-, उप. < √विद् ⌊ज्ञाने⌋।

e) नाभि- इत्यनेन सन्यायता द्र. (तु. पाग ५,१,२)।

f) विप. (नाभ्य-) च नाप. (नाभि-) च। चक्राङ्ग-प्रकरणे पाप्र. यत् प्र.। g) वैतु. SI. पूर्वेण समस्तमिति।

h) -*भ्ये ⌊प्र२⌋ + इव > -भ्य इव > यनि. (तु. ⌊तात्पर्ये⌋ GW.; वैतु. पपा. -भ्याऽइव इति विभाग इति?)।

i) व्यप. (ऋषि-विशेष-)। व्यु.?। < √नभ् ⌊*स्तुतौ⌋ इति स्यात्। j) व्यप.। अपत्येऽर्थे अण् प्र.।

k) व्यप. (⌊दिवि⌋ सोमरक्षक-विशेष-)। व्यु.?। न + (√भ्राज्>)भ्राज्->तस. इति (पा ६,३,७५)।

l) सपा. नभ्राट् (माश्रौ २, १,४,११ च)<>भ्राज (माश ३,३,३,११ काश्रौ ७,८,२२ आपश्रौ १०,२६,१५ च)<> तैआ १,९,३ भ्राट् इति पाभे.।

m) तु. सस्थ. टि. अभि।

n) सपा. नमेते<>वसेते इति पाभे.।

o) नमानि इति पाठः? यनि. शोधः (तु. खिसा ११, २५)। p) ननाम इति पपा.।

q) उपोत्तममुदात्तं भवति (पा ६,१,२१८)।

r) GW. प्रभृ. अधि इत्यनेन योगं वदन्तश्चिन्त्याः।

ऋ १,१३१,१; अनन्नमुः[a] तै ६,४,३,८; अन्नस्नमुः मै ४,५,२.

नन्त्व[b]- -न्त्वानि ऋ २,२४,१.

नन्नमत्- -मत् ऋ ८,४३,८.

नन्नमा(न>)ना- -ने तै ४,६,२,४‡[c].

नमत्- -मद्भिः पै २०,१५,१.

†नमयत्- -यन् ऋ ९,९७,१५; कौ २,१५८; जै ३,१५,६.

नमयिष्णु*- -०ष्णवः ऋ ८,२०,१[d].

नमस्[e]- -मः ऋ १,१,७;२७,१३[४]; ५१,१५;६२,२;६५,१[२]; ७१,६; ११४, ११; १३६, १; ६; २, २१,२; २८,८; ३६, ६; ३,३३, ८; ५१, ४; ५४, ३; ४,२१,५; २३,४;४४, ३; ५,४७,७; ४९, ५; ७३, १०; ६,५१,[(३, ५९, १)८]; ८[२]; ७५,१५; ७, ३६,५; ९४,४; ८, ७२, १५; ७५, १०; ८४,५; ९,६७,[२९; १०, ६०, १]; १०, ४, ७; १४,१५; १५, २; ३४, ८; ३७, १; ६८, १२; ८५, १७; ९२, ४; ११५, ९[२]; १६५, ४; खि २, १,४;८[३]; ९; ६[३], ३०; १४, ८; ९; १०[२]; ३, १५,१३; ४, २, ९-११; ४,१[३]; २; ३[२];४; ५,१४,३; ६, ३,४[३]; ७, २, २; ३; ३,१; २[२]; ७, ४; ६;९; खिसा १५,१०; २६,१५; २३; ३१, ११; मा २, ७; १९; ३२[८];३,२२†; ६३; ४,९;३५†; ५,७; ३४; ६,१२; ८, ८; २३; ९, २२[२]; १२, ६२; ६३; ६५; १३, ६[२]; ७;८; १५, १५-१९; २४; १६, १[३]; ८[२]; १४[२०]; १९[८]–२७[८]; २८[५]; २९[४]–३९[४]; ४०[६]; ४१[३]; ४२[४]–४५[४]; ४६[९]; ५२; ६४[२]–६६[२]; १७, ११[२]; १८,५३;५४; ५७; १९, ३६[३g]; ४५; ६८†; २३,१३; ३१,२०; ३४, १७†; ३६, २०[२]; २१[३]; ३७,२०; ३८,१२; १६; का २, २, १; ७, ४[६]; ३,३,१४†; ४, ४,२; १०,६†; ५, २, ७[२h]; ८, ५; ६, ३, १; ८,५,१; ९,४,१; १०,४,५; १३,५,१;२;४; १४, १,६[२]; ७; ८; १६,४,२; ४; ६; ८;१०; १७,१,१[३]; ८[२]; १४[२f]; २,१[८]–५[८]; ३,१[८]–५[८]; ४, १[८]; २[५]; ३[४]–५[४]; ५, १[४]–५[४]; ६, १[४]–५[४]; ७,१[४]–४[४]; ५[९]; ८,६; १८[६]; १८,१, १२[२]; २०, ३, ३;४;७; २१, ३, ५[३g]; १६; ४, १७†;२५,४,२; ३३, १, ११†; ३५,२,४; ३६,१, २०[२]; २१[३]; ३७, ३, ६; ३८, २, ६; ३, २; तै १, १, १२, १; २, ३,१; ९, १†; ११,१[२h]; ३, ४, २; ८,२; १०, २; ४, २६, १; ५,६,२†; १०, १[३]; ८, १, १; ७,२; १५, १; २, ६,९,८; ११,२†; १२, ४†; ३,१,४,४; २, ४, १; २[२]; ३; ४[५]; ५,५[४]; ६[३]; ८,१[७]; २[३]; ३; ३, ९,१; ४,२,५,२; ४; ८, ३[४];४,३;२,३[२];११,३;५,१,१[४]; ३;४[२];२,१[१७];२[९];३,१[१७]; २[१७]; ४,१[१७];२[१७];५,१[१०];२[५];६,१[१०]; २[५]; ७,१[१०]; २[६]; ८, १[११]; २[६]; ९, १[१०]; २[९]; १०,५; ११, २[२]; ६,१, ३[२]; २,६; ७,१३,२[२]; ५, ४,४, ५; ५, ५, १[३]¶; ७,२¶; ३[३]; ४[२]; ९, १[२]¶;३; ¶१०,१; ५; ७, २, ४; ६, १, ११, ६†; ३,२,५; ८, ३; ४; ५,७,३; ७, ३,१२, १[९]; ४,१६,१[५]; ५,२४, १[३]; मै १,२, २[२];६[२],†;७;१२[२]; १३; १६; ३,२८; ३९; ४,३;५, २; ३†; ९; ८,५; ७[२१]; ९, १; १०, ३[८]; १८; २, ५, १०; ६, १२; ७, १२[३]; १५[४]; १६[२]; ८, १०[५]; १४[२]; ९,२[८f]; ३[४३]; ४[४३]; ५[२९]; ६[२०]; ७[२१]; ८[२०]; ९[११]; १०[१०j]; १०,१[२]; १२,३[३]; १३, १२;२१[६]; ३, २,४;६,६;७,८†; ८,२[३j]; ९,१; ४[३]; १०,१[४];¶[२]; ११,१०; ४, ४, ६; ७, १[२]; ८, ५[२];९,२[४]; ६; ९; ११; १०,६; ११, ६†; १२, १; १३, ९†; १४,१४†; काठ १, १२; २,३[२]; ७; ८[२]; १३; ३, १; ६;७; ४,

---

a) =सपा. ऐब्रा २,२० आश्रौ ५,१,१४ आपश्रौ १२, ६,५ माश्रौ २,३,२,२५। शांब्रा १२,१ माश ३,९,३, ३१ शांश्रौ ६,७,९ काश्रौ ९,३,१५ तु नन्नमुः इति पाभे.। b) कृत्यार्थे त्वन् प्र. (पा ३,४,१४)।

c) सपा. नन्नमाने<>नन्नमाने इति पाभे.।

d) सपा. नमयिष्णवः<>यमयिष्णवः इति पाभे.।

e) बप्रा. सत् भाप. च नाप. (अन्न-, स्तोत्र- प्रमृ.) च। असुन्नन्तम्। करोतेर्योगे गतित्वं द्र. (पाग १,४,७४)।

f) सपा. सकृत् नमः<>नमांसि इति पाभे.।

g) =सपा. माश १२,८,१,७ तैब्रा २,६,३,२ आपश्रौ १, ९,९। आश्रौ ६,१२,९ माश्रौ २,५,४,११ कौसू ७३,६ तु पाठाऽभावः। h) सकृत् पाभे. कृते पृ १५७६ *a* टि. द्र.।

i) =सपा. आश्रौ ३,१२,४ आपश्रौ ९,७,४ माश्रौ ३, ३,६ शांगृ ५,४,५। काठ ६,८ तु पाठाऽभावः।

j) अघोरेभ्यः इत्यस्या ऋचश्चतुर्थस्य पादस्यान्ते श्राव्य-माणमेतत् पदमधिकमिति तन्निवारणपरः शोधः। सपा.

१०; १३; ६, ७; ९; ७,१; ६; ८; १७; ९,४; ६[८]; १३,९;१०; १५; १५, ८; १६, १२[२]; १५[५]; १७,१०[२]; ११[६]; १२[४२]; १३[५७]; १४[३०];१५[४१];१६[११]; १७[२]; १८, १५[२]; १८; २१, ७; २३, ३; २४, ७; ९[२]; २६, २[२]; १२[२१]; २८,४;७[२]; २९,३; ३०,८; ३१, ११; ३६, १३; ३८, २[४a]; ३९, १; ४०, ३[२]; ५; ४१,१[३]; ४३, २[८]; ४४, ५[५]; ५१, १[८]–५[८]; ६[१२]; क १,१२; १५[२]; २, १†; २[२]; ७;८; १३;१४; ३,८;११; ४,६; ८; ५,१†; ८, ७¶; ९[८]; २५,३[२];६[४]; २६,९[२]; २७, १[६]; २[४२]; ३[५५]; ४[३०]; ५[४१]; ६[११]; २८,१[२]; २९, ४[२]; ६; ३७,८†; ३८,२[२]; ४०,४;५[२];४४,७[२];¶; ४७,११; †कौ १, ११; १४; २, १५०; ८३२; ९००; ९९८; ११७८[२]; जै १, २,१;४; ३, १, १[२];१४,१०; ४, १४,४; शौ १, १०,२; १३,१[३]; २-४; २५,४[३]; ३२, ४; २, २,१;४;५; ८, ४[२]; ५[३];३५,४[३]; ३, २६, १-६; २७, १[४]–६[४]; ५,१,५?[b];७,१[२];३;९; १०; २२,४; २८, ११?[c]; ३०, १२[३]; ६, १३, १[३]; २[४]; ३[४]; २०, १; २[६d]; ३; २८,३; ५५, ३; ५६,१; २[४]; ६३, २[२]; ८४, ३; ९०, ३[४]; ९३, २; १२८,४; १३१,२; ७, ३३, १†; ९२,१; ११४,१; १२१, १[२]†; ८,१,१;

१४; २,४[२]; ९,२, १९-२४; ३, १२[४]; १३; २५-३१; १०, ७, ३२-३४; ३६; ८, १; १०, १[३]; ११,२, १;३;४[२]; ५;६; ८; ९[२]; ११;१२; १४;१५[४]; १६[५]; १८; १९;२२; २३;२७;३०; ३१[५];६, १; २[४];७[४];८[५];२३; १२,१,२६; ४२; ३, ११; ४,४५; १३,८,३; ५;६; ९,१; २; ४; १४,२,२०; ३४;३५[३];४६†;४८;१५,१८,५; १६,२,६; १७, १, २२[६]; २३[६]; १८, १, ४६†; २,२†; ४, ७१; ७२;७३[e];७४;८१[२]–८४[२]; ८५; १९,८,२; ७;११,६†; ५५, ५; २०,१६,१२†;१२८,१४;१४३, ३†; पै १,७, १; ४; ५; ९, २; २३,४; २९,४;३२,४[२];३७,२[४]; ४५,२;४[२]; ५०,३;५९,९; ८६, ६; ८८, ४[३]; ९९, ३[३]; २, ३०, ३†; ३९, ६; ५३, १-६; ५६, १-५; ६९, १-५; ७०, ५; ३, २४, १[४]–६[४]; ४, २०, ७[२]; ५, १,१[२]; ५, १-९; २७,४; ६; ६, २, ५?[b]; १०, ८; ७, ९,-१; २; ४;७; ११,८[५f]?; १९,३;४; ९, ३,८; १४, २[३]; ११,२,५; १३, १,२; ५; ५,८; ८,१६; १४,२, ४[४]; १०,१०; ११[२]; १२; १५, १९, १-१२; २०, ८[३]; २२, ८; २३, ११[३]; १६, १, १; २, ४; ३, ४[२]; ७, ७; ८; २१, १; २[४]; ७[५];८[४]; २३,३; ४०, ४[४]; ५; ४१, ५-११; ४६, १-१०;

४७,१-१०; ४८, १-५; ५२,२; ७८,१-६; १०४,१; ३; ४[२]; ५; ६; ८; ९[२]; १०५,१,२; ४; ५[४]; ६[५];८; ९; १०६, २; ३; ११[४]; १०७, १[३]; १७, ३, ७; ४, ११; १०, ३-६; २०, ५; २५, ४†; ३७, १; १८,९,१; १०,४; ५[३]; ११,६†; ३२,६[६]; ७[६]; १९,३, ४;५[२]; ९[३]; ५,१[३]; २[४]; ३[४]; ९, १; १५[४]; ११,५;१२,१०;११[0]; १४, १४; १८, ३[४]; १९, १२; १३; १४; २१,११; २२,१[२]; ~~२~~; ३; २४, १८; †२७, ११; १३; ३५,९[३]; ३८,१; ४८,३†; २०, ३०,५†; ३२,६; ४१, ९; ५६, ५; ६; ५७, ९; १०; ५८, १[२]; ४[५]; ५[५]; –मःऽ–मः खिसा २६, १५; –मसः ऋ १, १७१, २; १९०, ३; ८, २३,९ –मसा ऋ १, ५७,३; ६२,११; ६३,९; ८४,१२; ११४,२;५; १२८,⌊२; १०, ३१,२;७०,२⌋; १५२, ७; १५८, २; १७१, १; १८५, ७; १८६, ४; २,२३,१३; ३०,११; ३४, १४; ३५, ⌊१२; ४, ५०, ६⌋; ३,१,२; २,१४;३,८; १४, ⌊५; ६, १६, ४६; १०,७९,२⌋; ३१, ५; १९; ३२, ७; ५९, ५; ६१, ५; ४, ५, ११; ७, ७; १९,६; ३४,६; ५, १, १२; ४, ९;८,४; १२, ६; ४०, ८; ४१, १६; ४३, २; ६; १४; ४९, २; ८३, ⌊१; ८, ९६, १२⌋; ६,१,

तैआ १०,४५,१ अस्तु इति पाभे. ।

[a]) पाभे. कृते पृ १७७० *g* टि. द्र. ।

[b]) निर्देशः (√अम् ⌊*बले⌋>भावे) *अुमस्–>-मः प्र१ इति पदं स्यात् (वैतु. पपा. प्रभृ. यनि. इति ?)। वा. कृते सस्थ. सम्युञ्च्–>-ञ्चौ इत्यत्र टि. द्र. ।

[c]) अर्थः निर्देशश्च ?। नुम्– (भाप.स्त्री.) > नुमः द्वि३ इति विमृश्यम् ?।

[d]) पाभे. कृते पृ १७७० *h* टि. द्र. ।

[e]) सपा. कौसू ⌊८७,८⌋ पाठाऽभावः ।

[f]) धा. नाशे वृत्तिः ?।

४; ६; ११, ४; ⌊५; ७, २, ४⌋; १५,८; ५१, ८; ५२, १७;६७, २; ३; ६९, ६; ७, १२,१; १६, १; ४४, २; ८३, ८; ८६, ४; ९१,१; ९३,७; ९७,३; ८,१९, ५; २१,६; २३, २२;२६; ४३, १२; ४६, १७;४९,६; ७१-७२, १०; ९, ११, ६; ८९, ५; १०, ४७,६; ६१, २६; ६३, ५; ६९, १२; ८५, २१; २२; ९२, ९; खि ३, १, ६; मा †१५, २५; ३२; १८, ७५†; २१,३९; २७, १४; का †१६, ५,६; १४; २०, ५, ८†; २३, ४, ११; २९, २, ४; तै १, ८, २२, २†; ३, ४, ११, ३‡[a]; ४, १,८,१;†४, ४, २; ४; ५, १०, २†; ३‡[a]; मै २,१२,६; †१३, ५; ७; ८; ३, ११, २; †४, १०, १; ११, २; १२, ४; ६‡[a]; १३, ६[2]; १४, २; ७; १०; १२;१५; †काठ ८, १७; १२, १५; १७, १८; १८, १७$; २०[2]; २३, १२‡[a]; ३९, १३; १५[2]; ४०, ११; क २९, ५; †कौ १, ४५; ६३; २, ९९; ३५७; ६५४; ७९६; ९०४; ९१८; ९५४; †जै १,५, १; ७, १$; ३,१०,१; २९, १४; ५४, ४; ४, १४, ६; १६, १; शौ ३, ३, १; १५, ७; ४, १, ७; ३९, ९[b]; ५, २७, ४; ७,८, १; १०, ४,२३; १४, २, ३३†; १८,२, ४९; †२०, १५, ३; ८८, ६; १०९,३; पै १, ३७,४; २, ५७, १-५; ७४,१†; ५,२,७; ९, १, ४; १६,१७,५; १८, १०, ३†; –मसि ऋ ४, २१, ५; –मसे ऋ ८, २५, ७; शौ १४, २, ३५?[c]; –मांसि काठ १७, ११[d]; क २७, १[d]; शौ १, २५,१; पै १,३२,१; १४, २, १२; –मोभिः ऋ १, २४,१४; २७,१; ७७,२; १५३, ⌊१; ४, ४२,९; ७, ८४,१⌋; २, ३,५[e]; ३३, ४; ८; ३८, ९; ३, ४, ३; २५, ३; ४, ५८, २; ५, १, ⌊(१, १२८, ८) ७⌋२८, १; ४१, २; ८; ४२, ११; ६०, १; ६,१,९; ⌊१०; ७, ६३,५⌋;५०, १; ५१, ९; ६०, ३; ७, ७,१; ८, १; ३३, १३; ३४,१४; ४२, ⌊३; ६१,६⌋; ४३, १; ५३,⌊(१, १५९,१) १⌋; ९५, ५; ८, १९, १३; २२,३; १३; ६२,५; ९६, ६; ९, १६, ५; ९६, २; १०, ६,५; १३,१; ४६,२; ⌊(७,१०, ५)४⌋; मा ११, ५†; १३, ४३; १७, ९०†; १९, ३२; का १२, १, ५†; १४,४,६; १९,१,४†; २१, ३, १; तै १, ५, ११, ३†; ४,१,१,२†; २,१०, २; मै १, ६,२†; २, ७,१†;१७; ३,११, ७; †४, १०, ४; १३, ६[2]; ७; १४, ३;११;१७; काठ †४,१५; १६; १५, ११†; १६, १७; १८, २०[2]†; ३८, २; †४०, ७;११; †कौ १, १७; ७०; २, ९८४; †जै १, २, ७;७,८; ४, २४, ५; शौ ३, ८, ३; ७, ५२, ३†;१८,३,१६;३९†; पै१,१८, ३; ८, १३, २†; २०,३०,२†.

न॒म-उक्ति[f]– -क्तिभिः ऋ ८,४, ६; –†क्तिम् ऋ १, १८९, १; ३, १४,२; ५, ४३, ९; मा ५, ३६; ७,४३; १०, ३२‡[g]; १९, ६‡[g]; २३, ३८‡[g]; ४०, १६; का ५,९,२; ९,२,३; ११, १०, २‡[g]; २१, १, ५‡[g]; २५, ७, ६‡[g]; ४०,१,१८; तै १,१,१४, ३; ४, ४३, १; मै १, २, १३; ११, ४‡[g]; २, ३, ८‡[g]; काठ ३, १; ६, १०; क २, ८; –क्तीः मै ४,८,९[h]¶.

न॒मउक्ति-म (त् > ) ती– -त्या मै ४,८,९[i]¶.

नमसेन्य[j]– -न्यम् पै १,३७,४.

नमस् √कृ

¶नमस्-का॒र– -रः तै ६, ३, २,५; मै १,१०,१८;३,६,६; ९, १; काठ ३६,१३; –रेण शौ ४, ३९,९[k]; –रैः तै ५,५,७,४.

---

[a]) =सपा. तैआआ १०,५३। ऋ १,११४,८ मा १६, १६ श्वे ४,२२ मंब्रा २,१,८ तु विशिष्टः पाभे.। ऋ १, ३६,२ पाठाऽभावः। [b]) सपा. न॒मसा ( तैब्रा २,७, १५,१ च )<>ब्र॒ह्मणा इति पाभे.।

[c]) पाठः? म॒नसे इति शोधः (तु. सपा. पै १८, १०, ५; w. च)।

[d]) पाभे. कृते पृ १७७० f टि. द्र.।

[e]) सपा. न॒मोभिः<>भवन्तु इति पाभे.।

[f]) गस. क्तिन्नन्ते अनन्तरस्य गतेः स्वरः (पा ६,२,५०)।

[g]) सपा. न॒मउक्तिम् (माश ५, ५,४, २४ च )<> न॒मोवृक्तिम्( तैब्रा २,६,१,३ च) इति पाभे.।

[h]) सपा. न॒मउक्तीः<>न॒मोवृक्तिम् इति पाभे.।

[i]) सपा. न॒मउक्तिमत्या <> न॒मोवृक्तिवत्या इति पाभे.। [j]) शैषिकः एन्यः प्र. उसं. (पा ४,३,१७)।

[k]) सपा. नमस्का॒रेण (तैब्रा २, ७,१५,१ च)<> स्वाहाकृत्य इति पाभे.।

नमस्कार-वचन- काठ पुष्पि ५१.

नमस्-कृत्- -कृतम् पै १९, २,१०.

नुमस्-कृत,ता- -०त, -तम् मै २,९,१०; -ताभ्यः शौ ११, २, ३१; पै १६,१०६,११.

नुमस्-कृति[a]- -त्यां तै ३, २,४,२.

नमस्-कृत्य ¶तै ३,२,४,२[2]; ५;५,४,४,५;६,२,२,६; ¶काठ २१, ७;९; ३१, ११; क ४७, ११¶; शौ ७,१०७, १; पै २०, ३९,४.

नमस्यं, स्यां[b]- -स्यः ऋ २, १,३; १०; ३, ५, २; २७,१३; ५९, ४; ७,३८,३; तै २,४,१४, २[c]; मै ४,१२,३; कौ २,८८८†; जै ४,१३,३†; शौ २,२,१; २[d]; ३, ४, १; ६,९८,१; २०,१०२, १†; पै १,७,१; ३,१,१;५,२०, २[e]; १९, १२, १३; -स्यम् ऋ १,७२,५; पै १,४५,१; ५,२१, १; १९,२०, ५?; २०,११,५†; -स्याः तै २, ५, ९, ६¶; -स्यान् तै २,५,९,६; -स्यानि ऋ १०,६३,२; -स्याम् खि १, १२,८; -स्ये शौ ४, २६, ३; पै ४,३६,६; -स्येभिः ऋ ६,६८,३; -स्येभ्यः शौ ६, ९३, २; -स्यैः ऋ ७,९४, ४; मै ४,१४,७†.

√नमस्य, ¶नमस्यति तै १, ५, ७, ४; काठ ७, ४; क ५, ३; †नमस्यन्ति ऋ १, ३६,१९; ३, ६२, १२; कौ १, ५४; जै १, ५, १०; ४, ८, ५; नमस्यामः ऋ ३, १७, ४; मै ४, १३,५†; काठ १८, २१†; पै ९, ३,८; नमस्यन् ऋ १, ७२,५; पै २०, ११,५†; †नमस्यु,>स्या ऋ १, ४४, ६; २,३३,८; ५,५२,१३; ८, ४२, २; मै १, २, १३; काठ १७, १९; नमस्य ऋ ९, ११४, २; नमस्युत ऋ ३,२,८; †नमस्यत,>ता ऋ १, ८४, ५; ३, ६२,५; कौ २, ३०१; ८६६‡[f]; जै ३, २४,१७; ४, २१, ४‡[f]; नमस्याम तै २, ५, ९, ६; अनमस्यन् ऋ ६, ९, ७.

नमस्युत्- -स्यन् ऋ १,३३, २; ¶तै २, ३, ५, २; ५,६,५; -स्यन्तः ऋ १,११५,३; १२७, ७; ४, ६,⌊(५, ३,४) ११⌋; तै ६,६,३,५¶; मै ४,१०,२†; शौ १,१२,२.

†नमस्यन्ती- -न्तीः ऋ ३,५७, ३; ९,९५, ३; कौ १, ५४४; जै १,५५,१०.

नमस्या- -स्याः ऋ १०, १०४,७; -स्याम् पै ४, १०,१.

नमस्यु- -स्युः ऋ ८, २७, ११; -स्युभिः ऋ १,५५,४.

†नुमस्-वत्- -वत् ऋ १,१८५, ३; -वन्तः ऋ १, १६४,८; शौ ९,१४,८; पै १६,६६,८; -वन्ता ऋ ५, ६२, ५; -वान् ऋ १, १७१, २; ४, ४१,१; ६,६३,१; ७,६६,१;८५,४; १०,६१,२५.

नमस्वती- -तीः पै ५,७,१; -त्या काठ ७,८¶.

†नमस्-विन्- -विनः ऋ १, ३६,⌊७; ८, ६९, १७⌋; ७,१४, १; ३६, ५; ८, १३, १०; ७५, १४; १०, ४८, ६; तै २, ६, ११, ३; मै ४, ११, ६; शौ २०, ९२, १४; -विनम् ऋ १, १६६,२.

नुमो-नम[g]- -माय मै २, ९, १०.

नमो-वाकु[h]- -कः पै २०,३४, ६[i]; -कम् तै २, ६, ९, ५; मै ४, १३, ९; -के ऋ ८, ३५, २३; खि ४,९, ६; ५, ७, ३, ११; मा ८, २५; का ९, ४, ३; तै १, ४, ४५, २; मै १,३,३९; ४, १०, १; काठ ४, १३; १९ १३; क ३,११; शौ १३,६,५

†नमो-वृक्ति[a]- -क्तिम् ऋ १०, १३१,२[j]; तै १, ८, २१,२[j]; ३, १,३,२¶; ५, २, ११,२[j]; काठ[j] १२, ९; १४, ३; ३७, १८; शौ २०,१२५,२[j].

नुमोवृक्ति-व(त्> )ती- -त्या तै ३, १,३, २[k].

†नमो-वृध्[l]- -धम् ऋ ३, ४३, ३; -वृधा ऋ ३, ६२,

a) नुमउक्ति- इत्यनेन स-न्यायता द्र.।
b) अर्हार्थीयः यत् प्र.।
c) भा. पक्षान्तरे क्यजन्तात् यतं प्र. मन्वानश् चिन्त्यः।
d) सपा. नमस्युः<>मनसा इति पाभे.।
e) नमस्यायम् इति पाठः? यनि. च अयम् इति च शोधः। f) सपा. नमस्यत<>सपर्यत इति पाभे.।
g) विप. (शिव-)। बस. उप. घञर्थे कः प्र.।
h) भाप.। गस. उप. घञन्तेऽन्तोदात्तः।
i) सपा. नमोवाकः<>सहुसूक्तवाकः इति पाभे.।
j) पाभे. कृते पृ १७७२ h टि. द्र.।
k) पाभे. कृते पृ १७७२ i टि. द्र.।
l) विप. (मित्रावरुण-, यज्ञ-)। उस.।

१७; कौ २,१४; जै ३,२,५.

न(मस्>)मो-वृध[a]– -धासः ऋ ७,२१,९; –धैः ऋ ८,१३,९.

नमसान[b]– -नाः शौ ६,३९,२.

?नमे[c] ऋ ३,३९,६.

†नन्नमा(न>)ना– -ने ऋ १०, ८२, १; मा १७, २५; का १८, ३,१; मै २, १०, ३; काठ १८, २; क २८,२.

नम्य– -म्यम् पै १,२९,२.

नम्र– -म्रम् ऋ १०, ४९, ५; खि ५, १४, २; शौ २०, १२८, १३.

?नम एभ्यः[d] पै १९,१४,१४.

नमत्–, नमयत्–, नमयिष्णु*– ✓नम् द्र.

?न मशीकतं तं ग लापते पै १९, २५,४.

नमस्– प्रभृ., नमसान– ✓नम् द्र.

?नमागतम्[e] पै १९,४८,११.

नमी[f]– -मी ऋ १०, ४८,९[g]; –मीम् ऋ ६,२०,६†; –म्या ऋ १,५३, ७[h]; शौ २०,२१,७.

न-मुचि[i]– -चिम् ऋ १, ५३, ७; २, १४, ५; ७,१९,५; १०,७३,७; मै ४,३,४¶; †शौ २०, २१,७; ३७, ५; –चेः ऋ ५, ३०, ७; ⌊८; ६, २०, ६⌋; ८, १४,१३; मा १०, १४; १९, ३४; ७१†; २०, ५९; ६७; ७१; का ११,५, ५; २१, ३, ३; ४, २१†; २२, ६,५; ७, १; ५; तै १, ८, १४, १; मै २,६,१०; ३,११,३;४[2]; ७; ४,३,४¶;४,४[2]; काठ १५, ७; ३८,२;८;९[2]; कौ १,२११†; जै १, २२, ८†; शौ २०, २९, ३†; –चौ ऋ १०, १३१, ४; मा १०, ३३†; २०, ६८; ७६; का ११, १०, २†; २२, ७, २; १०; मै ३, ११, ४[2]; †; काठ १७,१९†; ३८,९[2];†; शौ २०, १२५,४†.

न-मुर[j]– -रात् शौ १३,८,१.

नमे,नमोनम– प्रभृ., नन्नमान-, नम्य-, नम्र- ✓नम् द्र.

नयत्-, नयमान– ✓नी द्र.

?नयशित[k]– -तौ पै ८,९,१२.

?नयून्[l] पै १,१५,२.

नर[m]– -०र पै १५, ६,८; –रः खि ५, ११,४?[n]; तै ७, १, १२, १?; मै २, ७,१२[o]; ३,१२,४; काठ ४१, ३; कौ १, ३६५‡[p]; जै १, ३८, ४‡[p]; –रम् पै १६,५२,३[q]?; –रा ऋ १,११७,१८?[r]; –०रा ऋ ८,

a) विप. (सखि-)। उस. उप. कः प्र. (पावा ३,२,५)।

b) विप.। व्यु.?। यनि. (नमस्– >✓नमस्य > *नमस्यमान–>नैप्र. यनि. (तु. सन्न्यायं सद् अर्शसान– इति ⌊एतद्विषये पूर्वो निर्देशो नेष्टः, धियसान– इत्यत्र च कानजन्तो निर्देशोऽपि नेष्टः⌋)।

c) निर्देशः? (नमस्– ⌊अन्न-⌋)>सप्त१ *नमसि> नैप्र. यनि. इति वा *नम– (⌊=अन्न-⌋)>सप्त१ इति वा (तु. ⌊निर्देशमात्रे⌋ GW. ORN.? च; वैतु. वें. सा. क्रिप. इति ?)।

d) पाठः? नमस्येभ्यः इति शोधः (तु. मूको. नम येभ्यः इति, सपा. शौ ६,९३,२ च)।

e) पाठः? न माऽऽगात ⌊लोटि मपु३⌋ इति त्रिपदः शोधः।

f) व्यप. (ऋषि-विशेष– ⌊साप्य-⌋)। व्यु.?। ✓नम् ⌊*स्तुतौ⌋+कर्तरि ईन् प्र. उसं. (पाउ ३,१५८)।

g) वैतु. सा. नाप. <नमिन्– (स्तोतृ-) इति।

h) वैतु. वें. स्क. नाप. (मरुद्-गण-) इति, सा. Gri. विप. इति च?।

i) व्यप. (वृत्र-विशेष-)। व्यु. ?। पपा. नावग्रहः। पाप्र (६,३,७५) न+(✓मुच् ⌊मोक्षणे⌋>कर्तरि) *मुचि– >तस. इतीव। वन– (वारि-)+(✓मुच् ⌊*निरोधे⌋ >भावे) *मुचि–>बस. *वनमुचि–> नैप्र. यनि. इति तु स्यात्।

j) नाप. (अमृत- ⌊देव-⌋)। व्यु.?। पपा. नावग्रहः। न +(✓मृ ⌊मरणे⌋>भावे) *मुर–>बस. यनि. (पा ६, २,१७२)।

k) पाठः? *नि-शि(त>)ता– (विप. ⌊हेति-⌋)> -ताम् इति शोधः।

l) पाठः? वधू–> -धूः इति शोधः (तु. सपा. शौ १,१४,२ यत्र मौलिकः पाठः; सस्थ. टि. यद्– > ?यत् इति, वि✓धू>?विधूयते इति च द्र.)।

m) बप्रा.। नाप. (नृ–)। व्यु. ?। <✓नृत् इति या ⌊५,१⌋; <✓नॄ इति अभा. प्रभृ.।

n) शोधार्थं पृ ९३२ *d* टि. द्र.।

o) पाठः? नरः (विप. ⌊पर्जन्यः⌋) प्र१ इति शोधः (वैतु. सपा. तैआ ६,६,६ नाराः ⌊=नराः इति भा. सा.⌋ इति पाठः ?)। p) पाभे. कृते पृ १५७१ *i* टि. द्र.।

q) पाठः? नरः इति शोधः द्र. (तु. सस्थ. टि. ?आस्य)।

r) द्वि२ (वैतु. वें. स्क. सं२ इति, GW. च तथेति कृत्वा नरा इत्येवं शोधुकः ?)। 'अश्विना वृषणा! (इत्येवं) सा वृकीः नरा (अश्विनौ) भरं (बहु) अह्वयद् इति (इति कृत्वा, अतः ⌊तत्फलतयेव⌋) ऋज्राश्वः कनीनः

२६, १६?[a]; -राः खि १,२,९; -राणाम् खि २, १४, ७?[b]; ३, १२[२],१; -रे मा ४०, २; का ४०, १,२.

२नारी- नृ- द्र.

नृर्-धिष[c]- -षः मा ८,५५; का ९, ७,३; तै ४,४,९,१; -षाय मा २२, २०; का २४, ७,३; तै ७, ३, १५, १; मै ३, १२,५; काठ ४३,५.

नर्य[d]- -ऽर्ये मा ३, ३७; का ३, ४, २; मै १, ५, १४[३]; काठ ७, ३[२]; ११[२]; क ५, २[२]; ६, १[२]; -र्यः ऋ १,६३, ३; १२१, १२; ४,२५,१; २९, २; ५, ४१, ९; ६,२४,२; ७, १, २१; २०, १; ९५,३; ९, १०५, ५; १०७,१; १०,२९,१;७; ५०, २; ६१,५; ९५, १०; मा १९, २; का २१,१, २; मै ३, ११, ७†; †काठ १७, १८; ३७, १८; क ६, १[२]¶; †कौ १, ५१२; २, ६६३; ९६२; †जै १, ५३, २; ३,५५,४; शौ २०, ७६,१;७†; †र्यम् ऋ १, ४०, ३; ५४, ६[e]; ११२, ९[e]; २, २२, ४; ६,२३, ४; ५३, २; ७२, ५; ७,२०,५; ४८,१; १००,१; १०, ७४, ५; १४७,१; मा ३३, ८९; ३७,७; का ३७,१, ७; मै ४, ९, १; कौ १,५६; ३७१; ४६६; जै १, ६,२; ३९, २; ४८,६; -†र्यस्य ऋ १, १८०, २; ७, २५,१; तै १, ७, १३, २; मै ४, १२, ३; काठ ८,१६; -†र्या ऋ १,७२, [१;७,४१,१]; १८५,९; ३,३४, ५; ४, १६, १६; १९, १०; ८, ९६,२१; तै २, २, १२, २; मै ४, १४, ६; काठ १७, १९; शौ २०,११,५; -र्याः ऋ १,१६६, ५; ६,२९,२; ७,७, ६; -र्याणि ऋ ४,१६,[६; ७,२१, ४];३६, ८; शौ १९, ४९, ३; २०, ७७, ६†; पै १४,४,३; -र्याय ऋ १, १२१,३; ४, २५,४; ८,२,२३; -र्ये पै १४, ४,३[f]; -र्यैभिः ऋ १०, ९९, १०; -र्येषु ऋ १, १६६,१०.

नार्य[g]- -र्यस्य ऋ ८,२४, २९.

†नर्या (र्य-अ)पस्[h]- -पसम् ऋ ८,९३,१; मा २१, ३८; २८,४; का २३, ४, १०; ३०, १, ४; मै ३, ११, २; कौ १, १२५; २, ८००; जै १, १४, १; ४, २, ३; शौ २०,७,१.

?नरंदमान[i] पै ७,५,८.

नरक[j]- -कः पै १६, ५२, ८; -कम् खि ७,६,१[k]; खिसा २९,३०.

१नारक[l]- -कम् शौ १२, ४, ३६; पै १७, १९,६.

२नारकृ[m]- -काय मा ३०, ५; का ३४,१,५.

---

(*दृष्टियुक्तः) इव (अजनि)' इति वा। अश्विना इति पाठः? वृक्कीमुखनिःसृतपृथग्वाक्यादित्वात् अँश्विना [सं२] इति शोधः स्यात्। अक्षन्- (नेत्र-)>*अक्षण्य- [दृष्टि-] +धन- > बस. *अक्षण्य-धन- > नैप्र. कनीन- इति कृत्वैतद्विषये पृ १०८६ $d$ टि. या व्यु. उक्ता, सा नेष्टा।

a) पदम्? तु. सस्थ. टि. √ह्वे>हुवत्।

b) °राणाम् इति स्वरः, °रा° इति खिसा [२०, ६] स्वरश्च? यनि. शोधः।

c) विप.(पूषन्-, विष्णु- [वैतु. PW. प्रमृ. नाप. इति?])। बस. पूप., अन्तोदात्तः, मुम् च उसं. (पा ६, २, १०७; ३,७०)। उप. भाप. <√धिष् (पोषणे [वैतु. भा. सा. उस. उप. खजन्तमिति?, म. अन्यथा व्युत्पादुकश्च?])।

d) बप्रा.। भाप. च, विप. (अपस्-,इन्द्र-प्रमृ.) च, नाप. च। तत्रसाध्वर्थे तस्मैहितार्थे स्वार्थे भावकर्मणोश्च यत् प्र. उसं.। e) व्यप. (वैतु. स्क [प्रथमे स्थले] विप. इति)।

f) सपा. नर्ये<>वर्ये इति पामे.।

g) व्यप. (राज-विशेष- [वैतु. निघ ३,१७ यज्ञ- इति])। अपत्यार्थे अण् प्र.।

h) विप. (इन्द्र-)। बस.।

i) हिरण्मयं न° इति पाठः? हिरण्मयेन रश्मिना इति द्वि-पदः शोधः। सस्थ. आभृतं > आभृतः इत्यपि शोधान्तरम्।

j) नाप. (स्वर्गेतर-परलोक-)। व्यु.?। <न+√रम् [रमणे =सेवने] वा नि√ऋ [नीचैर्गतौ] वेति या [१,१०] प्रमृ.; √नृ [नये] इति (पाउ ५, ३५) च। न+(√ऋ [*दीप्तौ] >भावे वा कर्तरि वा वुञ् प्र. उसं. [पाउ]) *आरक- > तस. बस. च यथाक्रमं *नाऽऽरक- इति *नाऽऽरकृ- इति च>नैप्र. नरक- इति च नरकृ- इति च यथोपलम्भम् इति तु मतम्। तस्य तमोमयत्वस्य श्रौतप्रसिद्धेः।

k) सपा. खिसा २५,१ नरके इति पामे.।

l) नाप. (नरक-)। व्यु.?। नरक- इत्यस्यैव सतः प्राक्स्वरं रूपं स्यादित्युक्तपूर्वम् (वैतु. पपा., शौच [३,२१;४,९०] नरक- इत्यस्यैव ततोऽर्वाक्स्वरं संहितायां दीर्घादितया परिणतं रूपमितीव?)। m) =१नारक-। नाप.। तत्रोक्तदिशा चास्यान्तोदात्तेन सता नरकृ- इत्यनेन संबन्ध-पर्यायः द्र.।

?नुरा च शुंसम्[a] ऋ ९,८६,४२.
नराचीु[b]– -ची पै २, ७७, ३; १९, ३०.८?[c]; –च्याम् शौ ५,३१,४.
?नुरा वा शुंसम्[d] ऋ १०,६४,३.
नुरा-शुंस[e]– -०स मै २,४,७[f]; पै ३, ३१,५[g]; –सः ऋ १, १४२, ३; २, ३, २; ३८, १०; ३,२९, ११; ५,५,२; १०,७०,२; ९२, ११; १८२, २; खि ५,७,३,८; ८, १; मा २०, ३७; २१, ५५; २७,१३; २८,१९;४२; का २२, ४,२; २३,६,८; २९,२,३; ३०, २,८; ४,८; तै ४,१, ८, १; मै १,१०,९¶; २,१२,६; ३, ११, १;५; ४,१०,३; १३,८[2]†;१४, ६†; काठ १८,१७;१९,१३;२०, १५;¶३४,१६;¶३६,३; ¶३७, ४; ३८, ६; क २९,५; शौ ५, २७, ३; २०, १२७, १[h]; पै ९, १,३; –सम् ऋ १,१३,३; १८, ९; १०६,४[i]; मा २१, ३१; का २३, ४, ३; मै १,१०,९¶; ३, ११,२; ४, १३,२†; काठ ३६, ३[2]¶; कौ २, ६९९†; जै ३, ५७,३†; पै ४,२८,४†; –सस्य ऋ ७,२,२; मा २९, २७†; का ३१,४,३†; तै १, ६, ४, १; ७, ४,१; मै ४, १३, ३†; काठ ५, ३; ३२,३; ३७,४†; पै २,२०, १; –से[j] मै ४, १०, ६; काठ २१, १४; –सेन मा २०, ५७; २८, २; का २२, ६, ३; ३०,१, २; तै १, ७, ४,१¶; मै ३,११,

[a]) यनि. पाठस्य स्थाने नुराशुंसम्, च इति व्यस्तक्रमः पपा. तदनुवादिनश्चेतरे सर्वे, तन्न । तथात्वे वा. असंगतेः । तथाहि, वनस्पत्यादिगणीयस्य सत उभयस्वरस्य नुराशुंस– इत्यस्य प्राति. अग्नेर्दैवतस्वरूपविशेषमात्रपरत्वेनर्चु प्रसिद्धे-रग्नेश्च मन्त्रोक्तदैव्यजनान्तःपाते स्वतःसिद्धे ततो विविक्त-तयाऽऽकाङ्क्षितस्य सतो मानवाऽऽत्मकजनान्तरस्याऽश्रा-वणप्रसङ्गात् । अत इह सोमस्य द्वयोर्जनयोः(गणयोः) मध्येऽन्त-श्चारित्वं श्राविवं भवति । तावेव द्वौ जनौ चतुर्थे पादे चकार-द्वयेन पृथक् परामृष्टौ द्र., तद् यथा, (√*नृ ⌊स्तुतौ⌋>) नुरा ( स्तोत्राणि ) न. द्वि३, यद्वा *नरस- > -रसा >नैप्र. नुरा ( स्तोत्रेण ) इति, शुंसः ( ⌊ऋषिमयः⌋ शंसनशीलः ) अन्योन्यश्च दैव्यः ( देवसंघातमकः ) इति कृत्वाऽत्र नुरा इति च शुंसम् इति च द्वे पृथक् स्थिते पदे द्र. । सोमपाने स्तोतॄणां च देवानां चैवाऽधिकार इति कृत्वा सोम आत्मनो धृत्यर्थं ताविवान्तरीयत इत्युक्तं भवति । सस्थ. धर्तृ– इति प्राति. धारणार्थे भाप. सत् प्रयोजनार्थे सप्त. प्रयुक्तं द्र. । अथवा, एक एवोत्तरश्चकारोऽत्र समुच्च-यार्थे स्यादिति कृत्वा नुरा ( स्तोत्राणि ), *आ-चशुंस– (⌊आ-चक्षाण-⌋<आ √*चश ⌊आख्याने⌋ ) > -सम् (पठन्तम् ) इति द्वे एव पदे स्याताम् ( वैतु. पपा. अनु-सरन्तोऽन्ये वा. विषये विविधवाचः ?) । $d$ टि. अपि द्र. ।

[b]) व्यु. ? । नाप. (ओषधि-विशेष-) इति W. प्रभृ. ।

[c]) तु. BKA.; वैतु. र. मूको. च ना° इति ।

[d]) यनि. पाठस्य स्थाने नुराशुंसम्, वा इति पपा. ? । नुरा ( दीप्त्या ⌊ तु. $e$ टि. ⌋) इति, (√आशु ⌊ दीप्तौ ⌋ >) *आशुंस– ⌊ भ्राजत्-⌋ > नैप्र. *वाशुंस– > -सम् ( दीप्तिमन्तम् ) इति कृत्वा द्वे पृथक् सती पदे पूष्णो वाऽग्नेर्वा विशेषणपरे द्र. (तु. $a$, $e$ टि. ; वैतु. अन्ये पपा. अनुसरन्तः वा इत्यनर्थकं पदमित्येवंवादिनः ?)।

[e]) नाप. [*जाज्वल्यमानाऽग्निदेव- (तु. ऋ ३,२९, ११ ⌊तत्रत्ये वि√जन्>विजायते इति पदे टि. च⌋)]। व्यु. ? । पपा. नावग्रहः । नुर– इति वा नृ– इति वा पूप. इति, ( √शंस ⌊स्तुतौ वेच्छायां वा⌋> ) *शुंस– इति उप. इति च कृत्वा कोऽपि समास इति चोभय-पदस्वर इति च प्रायोवादः (तु. या ⌊९,३⌋ पाग ⌊६,२, १४०⌋ सा. PW. प्रभृ.)। (√वर्ण् ⌊*दीप्तौ⌋>भावे) *वुर्णर्– > *वुर्णरा तृ१ > नैप्र. *नुरा ( दीप्त्या ) + (√आशु ⌊दीप्तौ⌋>कर्तरि *आशु–>⌊वीप्सायां द्विरुक्तौ⌋ *आशु-आश–> नैप्र. ) *राशुंस–>(संहितामात्रे ⌊न समासे⌋) *नुराशुंस– (दीप्त्याऽतिशयेन दीप्तिमत्-)>नैप्र. यनि. इति तु स्यात् ।

[f]) पाभे. कृते पृ ७२३ $l$ टि. द्र. ।

[g]) ना° इति पाठः ? यनि. शोधः (तु. मूको.)।

[h]) तु. खि ५,८,१ आश्रौ ८,३,१० शांश्रौ १२,१४,१ शंपा.; वैतु. RW. नाराशंसः इति ? ।

[i]) यद्यत्र नराशंसाग्निश्च पूषा च द्वे अपि देवते, यदि वाऽऽदित्यविशेषपरः पूषेह देवता नुराशुंस– इति प्राति. च तस्य विप., तदुभयथापि नुराशुंस– इत्यस्य उक्तैव व्यु. द्र. । यदि तूत्तरे कल्पे पृथिवीपरः पूष-शब्दस्तर्हि नुराशुंस– इत्यस्य व्यु. विभिद्येतैव । उक्तयोः *नुरा इत्यत्र च *राशुंस– इत्यत्र च 'दीप्तिः' स्थाने 'निवासस्य' वाच्यत्वमित्यभ्युपगमात् ।

[j]) नाप. [यज्ञ-विशेषपर- ( नाराशंस– ⌊तु. या ८, ६ इत्यत्र कात्थक्यमतम्; वैतु. SEY ७९?⌋)] । नुराणां ( पितृविशेषाणां दातृविशेषाणां) वा + ( √वाश ⌊शब्दे⌋

३; काठ ३२, ३¶; ३८, ८.
नाराशंस- यद्र.
नराशंस-पीत[a]- -तस्य तै ३, २,५, २[२];३.
नरिष्टा ⌊,ष्ठा⌋[b]- -ष्टा शौ ७, १३,२; ११,१०, २४; पै १६, ८७, ४; २०,३७,८; –ष्टायै मा ३०, ६; का ३४,१,६.
?नरे-ष्ठा[c]- -ष्ठाम् ऋ ४,३३,⌊८(३६, २)⌋.
नर्तयत्- ✓नृत् द्र.
✓नर्द् (शब्दे)
नर्द[d]-
नर्द-बुद[e]- -०द तै ३,३,१०,१.
नर्म[f]- -र्माय मा ३०, ६; २०[g]; का ३४, १,६; ४,२[g].
नर्मदा[h]- -दायै[२], –०दे खि २,१,८.
नर्य- नर- द्र.
?नर्यपांसि[i] ऋ १, ८५, ९; ८, ९६,१९.
नलद[j]- -दस्य शौ ६,१०२,३; पै २, ७७,२; १९,१४,३.
नलदी[k]- -दी शौ ४,३७, ३; पै १३, ४,३.
नव,वा[l]- -वः ऋ २, १८,१; ३,११, ५; ४, ५१, ४; कौ २, ९०६†; जै ४,१५,१†; ‡शौ ७,८६,१[m]; १४,१,२३[m]; –वःऽ-वः ऋ १०, ८५,१९; तै २, ३,५,३; ४,१४, १†; मै ४, १२, २†; काठ १०, १२†; शौ ७,८६,२†; १४, १, २४; पै १८, ३, ३†; –वम् ऋ १,२०,६;५, ९, ३; ७, १५,४; ८,२४,२३; ६९, १५; ९, २१, ६; ८६, ३६; १०, ८६, १८; ८९, ७; १३५,३; १४३,१; खि ५, ७, ३, ५; मा २८, ३६; का ३०, २,५; ¶तै २, ३, १०,१; ११,२; मै ¶२, ३, ४; ५; ४,

>भावे) *वाशंस- > नैप्र. यनि. ( नरकर्मिका स्तुतिः ⌊वैतु. कात्थक्यः नरकर्तृका स्तुतिरिति ?⌋) । सपा. नराशंसे <>नाराशंसे इति पाभे. ।

[a]) विप. (सोम-)। तृस. पूप. प्रकृतिस्वरः पा (६,२,४८)।

[b]) बप्रा. । विप. स्त्री. ( ⌊*बहु-नरा-⌋ सभा- ) च भाप. ( *आनन्द-प्राचुरी- ) च । पपा. नावग्रहः । प्रथमेऽर्थे नर- ( मनुष्य- ) + (✓भृ ⌊*प्राचुर्ये⌋ >भावे) *भरिस्- >षस. *नर-भरिस्- > नैप्र. *नरिस्- + ( ✓*ता ⌊धारणे⌋ >भावे) *ता- > बस. *नरिष्-टा- । द्वितीयेऽर्थे (✓नन्द् ⌊आनन्दे⌋ >भावे ) *नन्द- >नैप्र. *नन- + भरिस्- >*नरिस्- (आनन्द-प्राचुर्य-) इत्येव विशेषः। शेषं पूर्ववत् [ आनन्द-प्राचुर्यवत्-क्रीडादि- ( वैतु. भाप. इत्येव कृत्वा < न + ✓रिष् ⌊ हिंसायाम् ⌋ इति सा., <✓नृत् इतीव चार्वाञ्चः)] ।

[c]) विप. (⌊*वहन-समर्थ-⌋रथ-)। व्यु. ?। 'प्रचुरं वहनं धत्ते' इति कृत्वा [✓नृ ( नये ⌊=*वहने, *कर्षणे⌋) >भावे नर- > ⌊प्राचुर्ये⌋ *नर-मयस- >नैप्र.] *नरेष्- + (✓*था ⌊=✓धा⌋ > कर्तरि ) *था- >उस. *नरेष्-ठा- इति ( वैतु. पपा. प्रभृ. नरे-स्था- इत्येवं विगृह्णन्तः; नर- ⌊मनुष्य-⌋ इति वें. सा., नृ- इति GW. GRV. प्रभृ. इति पूप., ✓स्था >स्था- इति उप. इति च कृत्वा पूप. सप्त. वा च. वाऽलुग् इति ?) ।

[d]) भाप. (वैतु. भा. सा. कर्तरि कृत् ) ।

[e]) विप. ( ⌊ शब्दकृत्- ⌋ इन्द्र- ) । व्यु. ?। पपा. नावग्रहः । उस. उप. (✓भृ ⌊*कृतौ⌋ >कर्तरि) *भृत- > नैप्र. यनि. (तु. सपा. –०द <>नन्द-बल- > -०ल इति पाभे. यद्र. तत्रत्यं टि. च; वैतु. भा.?, सा.? ⌊✓बुद् 'निशामने' >कर्तरि⌋ *बुद- इति पृथक् पदमितीव, भा. ⌊पक्षान्तरे ⌋ = नर्तितबुद्बुद- इत्यपि ?) ।

[f]) भाप. (रञ्जन-)। (✓नन्द् ⌊*रञ्जने⌋ >भावे) *नन्दर- > *नन्दर-मय- > नैप्र. *ननर्मय- > यनि. [ वैतु. <✓नृत् इति WAG ( १, २३० c ⌊तु. हिं. नट⌋ ), BDG ⌊१,८१८,२⌋ प्रभृ. ] ।

[g]) सपा. तैब्रा ३,४,१५,१ हुसाय इति पाभे. ।

[h]) अर्थः व्यु. च ? ।

[i]) पाठः ? नर्य- > नर्या द्वि३ इति च अपांसि इति चेह पदे । नैप्र. च °र्या + अ° > °र्या° > °र्य° इति ह्रस्वः परिणतः सन् शोध्यः द्र. (तु. GW. MVR ⌊२८⌋ प्रभृ.; वैतु. पपा. प्रभृ. नरि अ° इति पदे इति ?) ।

[j]) नाप. ( ओषधि-विशेष- ⌊जटामांसी- इति PW. प्रभृ., उशीर- इति सा.⌋ । व्यु. ? ।

[k]) नाप. ( अप्सरो-विशेष- ⌊तु. W. B. प्रभृ.; वैतु. सा. ओषधि-विशेष-⌋ ) ।

[l]) विप. (अग्नि-, रथ-प्रभृ.)। व्यु.?। <आ✓नी इति या ⌊ ३, १९ ⌋, <✓नु ⌊ शब्दे ⌋ इति अक्षी., < नु ⌊अव्य. इतीव GW. प्रभृ.⌋ । न + ( प्रत्न- > भावे *प्रत्नमय- ⌊ पुराण-भाव- ⌋ > मतुबर्थे) *प्रत्नमय-मय- ( पुराण-) > तस. अ-प्रत्नमयमय- > नैप्र. यनि. इति तु मतम् ।

[m]) सपा. नवः <> पुनः (तैब्रा २,७,१२, २; ८,९,३ च) इति पाभे. ।

१२,८†; ¶काठ ११, ७; १९, १३; २४, ७[२]; ४०, १४$; क ३७, ८[२]¶; शौ १२, ३, ३२; १७,२,४४; †२०, ६६,२; ९२, १२; १२६,१८; पै १७,३९,२; १८,११,४;२०,१४,३; –वम्ऽ- –वम् पै १८, २४,५; –वस्य ऋ ८, २३, १४; मै ४, ३, २¶; काठ १२, ७[२]¶; कौ १, १०६†; जै १, ११,१०†; –वया ऋ २, २४, १; –वा ऋ १, ९५, ७; १४४, ५; ८, ४५, २५; पै ८, १४,७; १५, १२, ५; –वाः ऋ ५,६,८; काठ ८,१५[२]; शौ १२, २,४१;१९,३४,७; पै ११,३,७; १७,३४,२; –वानाम् ऋ ८, ५, ३७?[a]; १०, ८९, ⌊( १, ४, ३) १७⌋; –वानि ऋ ७, ६१, ६; शौ ९, ५, २५; –वाभिः ऋ ४, ३१, १३; –वायाम् ऋ १०, १६०, ५; शौ २०, ९६, ५†; –वासु ऋ १, ९५, १०; पै ८, १४,१०†; –वे ऋ ४, ३२,२३; –वेन ऋ १, ३१,८; २, १८,३; ६,५०,६; खि ५, ७, ३,५; मा २८, १६; का ३०, २, ५; †मै ४, ११, १; १३, ८; काठ १९, १३; –वेभिः ऋ ४,२०,५.

नव-गत्[b]– -गत्[c] तै ४, ३, ११,१; मै २, १३, १०; काठ ३९, १०; शौ ३,१०,४; ८, ९,११; पै १, १०४, ४; १६, १९, १; ७३,३.

नव-जा– -जाः ऋ ४,६,३.

नुव-जात[d]– -तः ऋ ५, १५, ३; खि ५,७,३,२; मै ४, १३,८†; काठ १९,१३;–†तम् ऋ ७,९३, १; तै १, १, १४, १; मै ४, ११,१; काठ १३,१५; –†तस्य ऋ ७, ३, ३; कौ २,५७१; जै ३, ४६, ६.

नव-ज्वार्[e]– -रः ऋ १,४२,८.

नव-दावॅ[f]–

¶नवदाव्य[g]– -व्यः काठ ३४, ९[२].

?नुव-नाभ– -भम् खि ४, ११, ७.

¶नुव-नीत[h]– -तम् तै २,३,१०,१; ११,२; ६, १, १,५[२]; मै २, ३, ४; ५; काठ ११, ७; २३, १; क ३५,७; –तस्य काठ २४, ७; क ३७, ८; –तेन तै ६,·१, १, ५[२]; मै ३,६,२[२]; काठ २३, १; क ३५,७.

¶नवनीत-त्व– -त्वम् काठ २४, ७; क ३७,८.

नव-सू[i]– -स्वः ऋ ४, ३४,५.

नुवा(व-अ)वसान[j]– -नम् तै १,६, ७, ३; मै १, ४, १०[२]; काठ ३२, ७[२].

नुविष्ठ,ष्ठा– -ष्ठम् ऋ ५, ३२, ११; –†ष्ठया ऋ १,८२,⌊२; ८, २५, २४⌋; ८,२०, १९; मा ३, ५१; का ३,७,१; तै १,८, ५, २; मै १,१०,३; काठ ९,६; क ८, ९; कौ १, ४१५; जै १, ४०, ७; –ष्ठाय ऋ ५,२७,३.

नुवीय[k]– -यान् ऋ ३,३६, ३.

†नुवीयस्– -यः ऋ २, १९, ८; ६, १८,१५; २१,१; ७,२६,१;३५, १४; ३६, २; ८, ४०, १२; ९, २३,२; १०,५९,१; ६१,⌊(१०) ११⌋; ६९, ३; १७९, ३; मै ४, १२, ३; काठ ८, १६; कौ १, ५०२; जै १,५२,६; शौ ७,७६, १; १८, २, ३१$; ३, १७‡[l]; १९, ११, ४; पै १३, ८, १४; –यसः ऋ १, १३१, ६[२]; शौ २०,७२,३[२]; –यसा ऋ १,१२, ११; ६, १६, २१; ८, ३९, ६; तै २, २,१२, १; काठ २०,१४; –यसे ऋ १,१५६, २; ९, ९,८; –यान् ऋ १,११०, ७; ६, ४४, ७; १०,२७,१९.

†नुवीयसी– -सी ऋ ७,५९, ४;

---

[a]) पाठः ? *नुव-नव–> नुवानवानाम् इति शोधः (तु. छन्दः)।

[b]) विप. (⌊नवोढा-⌋ वधू-)। उस. उप. <√गम् इति।

[c]) सपा. आपमं २,२०,३० शांगृ ३,१२,३ तु नवकृत् इति, कौगृ ३,१५,२ ?नवकम् इति पाभे.।

[d]) विप. (अग्नि-, स्तोम- प्रभृ.)। बस. उप. भाप.।

[e]) कस. अन्तोदात्तः। उप. भाप. <√ज्वर् ⌊संतापे⌋ इति (तु. सा. BW. प्रभृ., वें. =दवाग्नि- इति; वैतु. स्क. बस. ⌊तथा सति स्वरानुपपत्तेः⌋ पक्षान्तरे च उस. उप. कर्तरि प्र. इतीव, GW. विप. इति च ?)।

[f]) नाप.। कस. अन्तोदात्तः (वैप२ यद्र.)।

[g]) विप.। तात्रभविके यति प्र. तित्स्वरः।

[h]) नाप.। बस. पूप. स्वरः। उप. भाप.।

[i]) नाप. (गो-)। उस.।

[j]) नाप. (गृह-)। बस. (तु. भा.; वैतु. ⌊पक्षे⌋ भा. सा. K. प्रभृ. कस. इति ?)। उप. =अध्यवसाय-।

[k]) =१नुव्य–। विप. (सोम-)। कृतमित्यर्थे छन् प्र. उसं. (पा ४,४,१३३ ⌊तु. सकक्षं पूर्व्य–>-र्व्यान्, GW. प्रभृ.; वैतु. वें. सा. <नुवीयस्– इति ?⌋)।

[l]) पाभे. कृते पृ १६७७ j टि. द्र.।

